...रकेसरिश्रीरघुनाथसूरिविरचितः

# अद्वैतस्तवः



ओडलमनेरव्यपाह्ववेदान्तरत्नपाण्डुरङ्गशास्त्रिविरचित-

...तिषिकासँव्वलितः



मध्वमतकुञ्जरकेसरिश्रीरघुनाथसूरिविरचितः

# अद्वैतिरत्नं

ओड्लमने इत्युपाह्ववेदान्तरत्नपाण्डुरङ्गशास्त्रिकृतं-

ज्ञानाञ्जनेषिकासंवलितः



श्री महादेव वामन गोडबोले इत्येतैः स्वीये

' सेण्ट्रल प्रिण्टिङ्ग प्रेस ' इति नामके

मुद्रणालये मुद्रितः

प्रकाशकः



अङ्कोलानगरनिवासी

ओड्लमने इत्युपाह्ववेदान्तरत्नपाण्डुरङ्गशास्त्री

अस्य ग्रन्थस्य पुनर्मुद्रणादिसर्वेऽधिकाराः प्रकाशकेन स्वायत्तीकृताः

शकाब्दाः १८५६

मूल्यम्–द्वादशाणकाः

अद्वैततत्त्वविचारैकप्रवणानां सायुज्यनिवासिनां
ज्येष्ठभ्रातृचरणानां श्रीमाधवापरपर्याय-
हरिहरशर्मणां अष्टमवार्षिकस्मृतये
प्रकाशितोऽयं
ग्रन्थः

अस्याद्वैतस्तवस्यास्मत्कृतां ज्ञानाञ्जनेषिकाख्यां
व्याख्यामवलोक्य दत्तपारितोषिकान् श्रीदर्भङ्गामहा-
राजान् मङ्गलापुरनिवासिनां आयुर्वेदभूषणोपपदधा-
रिणः यम्. वेङ्कटेशशास्त्रिणश्च सानन्दमभिनन्दामः।

श्रीचन्द्रमौलीश्वरो विजयते तराम्.

## प्रास्ताविकं किञ्चित्.

अयम्—अद्वैतस्तवनामा—ग्रन्थः श्रीरघुनाथसूरिविरचित इति, अस्य ग्रन्थस्य समाप्तौ "कविकुलतिलकमध्वमतकुञ्जरकेसरिश्रीरघुनाथसूरिविरचितः" इति विन्यासाद्विज्ञायते। परं चायं पण्डितप्रकाण्डः श्रीरघुनाथसूरिः, न्यायवेदान्तग्रन्थोत्तमयोर्न्यायरत्न शङ्करपादभूषणाख्ययोर्ग्रन्थयोः प्रणेतुर्विख्यातकीर्तेर्विद्वन्मूर्धन्यात् 'पर्वते' इत्युपाह्वाच्छ्रीरघुनाथशास्त्रिणः सकाशाद्भिन्नः उत स एव वेति निर्णेतुं न पार्यते। तादृशागमकाभावात्।

ग्रन्थश्चायं मध्वमतस्य खण्डनरूपः। अस्मिन् ग्रन्थे — ब्रह्मणो निर्धर्मकत्वम्, प्रत्यगात्मपरमात्मनोरेकत्वम्, मुद्राधारणखण्डनम्, शिवपुराणतामसत्वखण्डनम्, शिवजीवत्ववादखण्डनम्, हरिहरतारतम्यवादखण्डनम्, मध्वशब्दव्युत्पत्तिरित्यादिविषयाः संक्षेपतो मूलकृता, अस्य व्याख्यायां व्याख्यात्रा च सप्रपञ्चं सप्रमाणं च प्रतिपादिताः। अतो नास्य ग्रन्थस्योपयुक्तत्वं पुनर्वर्णनीयमस्ति। इमं ग्रन्थं प्रकृत्य — श्रीमज्जगद्गुरुभिः शृङ्गपुराधीश्वरैः श्रीस्वामिपादैर्बेङ्गळूरपुरे प्रतिष्ठापितायां वेदान्तपाठशालायां प्रधानाध्यापका निखिलशास्त्रपारदृश्वानः 'न्यायपञ्चानन,' महामहोपाध्याय, इत्यादिबिरुदावलीविभूषिता., ये चाधुना कूडलिमठाधीशत्वमलङ्कृतवन्तः सन्तिते **श्रीविरूपाक्षशास्त्रिणः** प्राशंसन् यथा—

"विदितचरमेवेदं तत्रभवतामास्तिककुलमण्डनायमानानां पण्डितप्रकाण्डानां यत्किलातीतानेकसंसारपरम्परासमार्जितसत्कर्मनिकायसमावर्जितपरमेश्वरानुग्रहासादितान्तःकरणशुद्ध्यधीननित्यानित्यवस्तुविवेकेहामुत्रार्थफलवैराग्यशमदमोपरमतितिक्षासमाधिश्रद्धा मुमुक्षाख्यसाधनचतुष्टयसंपन्नैः श्रवणमनननिदिध्यासनाभ्यासपाटवदूरोत्सारितनिखिलप्रतिबन्धकानुबन्धैर्महामहिमशालिभिः कैश्चिदेव पुरुषधौरेयैः प्राप्यमाणं निर्मृष्टनिखिलदुःखानुषङ्गं नित्यनिरतिशयापरिच्छिन्नसुखमात्रस्वरूपमद्वितीयाखण्डचिन्मात्रप्रत्यगभिन्ननिष्कलङ्कपरमात्मतत्त्वमजानानाः अतिकरालकलिकालकलुषीकृतनानाविधकुतर्काकुलचेतसः अनादिजननमरणप्रवाहपरम्परात्मकसंसारमहाकूपे बम्भ्रम्यमाणाः आरोपिताकस्मिकाहङ्कारपुरस्सरा आत्मानात्माविवेकान्धतमसा मोमुह्यमाना एव प्रायेण जनिमन्तो दरीदृश्यन्त इति, तदेतदुपलभ्य दुःखपङ्कनिमग्नप्राणिनिकायोद्दिधीर्षुः किल भगवान् परमकारुणिकः

'द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुने'

इति वचनानुरोधेन बादरायणात्मना पराशरादवतीर्य निखिलवेदान्तनिकुरम्ब-तात्पर्यनिर्णायकन्यायनिचयात्मकम् 'अथातो ब्रह्मजिज्ञासा' इत्यारभ्य 'अनावृत्तिः शब्दादनावृत्तिः शब्दात्' इत्यन्तं सूत्रजालमुपनिबबन्ध। तच्च सूत्रजातमतिमन्दमतिदुर्विवेचमिति मत्वा,

'चतुर्भिः सह शिष्यैस्तु शङ्करोऽवतरिष्यति'

इत्यादिवचनानुरोधेन परमकारुणिको भगवान् शङ्करः प्रसन्नगम्भीरेण नानाविध-वाचस्पत्यादिविद्वच्छिरोमणिगवेषणीयगूढाशयगर्भितेन भाष्येण सभूषयामास।

अन्ये च रामानुजादयः स्वस्वमतिवैभवानुसारेण विशिष्टाद्वैतादिमतानुरोधिभाष्य-मबीभषन्। तत्र च द्वैतसिद्धान्तप्रवर्तकाः श्रीमन्तो भगवदानन्दतीर्थाः वाय्ववतारपुरुषाः, विशिष्टाद्वैतसिद्धान्तप्रवर्तकाः श्रीमन्तो भगवद्रामानुजाचार्याः अनन्तावतारपुरुषाः, अद्वैतसिद्धान्तप्रवर्तकास्तु श्रीमन्तो भगवत्पादास्त्रिमूर्त्यन्तर्गतभगच्छङ्करावतारपुरुषा इति तत्तन्मताभिमानिनां घण्टाघोषः। तत्र वाय्वनन्तयोरुत्कर्षतारतम्ये विप्रतिपत्तिसम्भवेऽपि, उभयापेक्षया शङ्करोत्कर्षे न कापि विप्रतिपत्तिः इति तदवताराणां पूज्यपादानां श्रीशङ्कर-भगवत्पादानां गौरवमवचनसिद्धमेव।

'द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुने,'
'चतुर्भिः सह शिष्यैस्तु शङ्करोऽवतरिष्यति'

इत्यादिपूर्वोक्तवचनाभ्यां विष्णुरूपस्य व्यासस्याशयं तत्समकक्षो भगवांस्त्रिमूर्त्यन्त-र्गतशङ्कररूपी शङ्कर एव यथावदवगन्तुं पारयतीति ब्रह्मसूत्राणामप्युपनिषदामिव अद्वैत एव परमतात्पर्यं न द्वैते विशिष्टाद्वैते वेति निश्प्रचं विपश्चिदपश्चिमानम्। तदलमप्रसक्त-प्रपञ्चनेन। अवसरप्राप्त एव विषये लेखनीं व्यापारयामः।

अयं किलाद्वैतस्तवकर्ता अनितरसाधारण्या वाग्धोरण्या नानाविधविषयगुम्फि-तया च भारत्या प्रत्नकविकुलसार्वभौममहाकविकालिदासमनुकुरुत इव। यस्तु वायुस्तु-त्याख्यः कश्चन प्रबन्धः केनचिद् द्वैतिना व्यरचि। तत्खण्डनरूपोऽयमित्यापाततः प्रति-भाति। तथापि मन्दमतीनां तदीयग्रन्थपर्यालोचनेन स्यात्कदाचिदनास्थापिशाचिकाक्रान्ति-रद्वैत इति तन्निराचिकीर्षया अत्र कुत्रचित्तदीयमतवस्तुस्थितिः स्थालीपुलाकन्यायेन दिङ्मात्रतया समसूचि प्रबन्धकर्त्रेति नैवकिंचिद्दुष्यति, प्रतिपिपादयिषितविषयस्या-

तथात्वात्, अन्यत्राभिनिवेशात् । न हि परकीयमतस्थितिमजानानः कश्चिदपि स्वमते हेयोपादेयत्वे विवेचयितुं पारयाति ।

" तथाप्यनुग्रहादेव तरुणेन्दुशिखामणेः ।
अद्वैतवासना पुंसामाविर्भवति नान्यथा ॥ "

इत्यादिवचनरीत्या यदि कस्यचिन्महनीयस्य जन्मत एव वामदेवादिवत् साध्वी वासना स्यात् आस्तां नाम प्रकृते नैतावता कापि हानिः, श्रूयते किलाभियुक्तानामाभाणकः– किमार्द्रकवाणिजो वहित्रचिन्तयेति । करतलामलकायितं चैतदेतद्ग्रन्थपरामर्शकानाम् ।

अस्य च व्याख्याता नानाशास्त्रेतिहासपुराणप्रबन्धपारदृश्वा असाधारणव्याख्याशैलीयुतश्चेति सुविशदमेव प्रेक्षकाणाम् । अवश्यं चायं ग्रन्थः अद्वैतमतादरैः श्रद्धालुभिः पुरुषधौरेयैः कण्ठे कर्तव्य इति क्रियासमभिव्याहारेण प्रार्थयामहे ।

अस्मिंश्च प्रबन्धे प्रबन्धा निरतिशयचमत्कारकारिण्या वैरिणामपि प्रसभं मनोहारिण्या असाधारणसुललितपदविन्यासभूषितया वाग्धोरण्या हरपारम्यप्रतिपादनं, हरोपासकानां चोत्तमाभिलषितासिद्धिः, तन्निन्दकानां गतिः हरिहरयोर्वैषम्, मध्वाचारमतप्रवर्तकवृत्तान्तः मध्वोत्पत्तिपदव्युत्पत्ती, इत्यादिकं सप्रमाणं सोपपत्तिकं सविस्तरं निर्मत्सरमुपवर्णितम्, मात्सर्यमुत्सार्य विलोकयतां पण्डितप्रकाण्डानां हृदयङ्गममिति स्वानुभवैकवेद्ये नास्माभिरस्ति किंचिदत्र वचनीयमिति प्रबन्धस्य प्रबन्धु स्तद्व्याख्यातुश्चाचन्द्रार्ककीर्तिप्रतिष्ठे अनुवर्तेतामिति भगवन्तं मारमणमुमारमणं साञ्जलिबन्धं सहस्रकृत्वः प्रार्थयामहे इति शिवम् ।"

एतेनास्यग्रन्थस्याभ्यर्हितत्त्वोपयुक्तत्वादिकं विदुषां निर्मत्सराणां सुविशदमिति शिवम् ।

ओड्लमने इत्युपाह्वः पाण्डुरङ्गशास्त्री.

श्रीः

## ज्ञानाञ्जनेषिकोपेतस्याद्वैतस्तवस्य विषयानुक्रमणिका


| विषयाः | पृ. |
|---|---|
| आदिमः श्लोकः ... | २ |
| द्वितीयः श्लोकः ... | २ |
| अत्र श्लोकद्वयेऽपि मङ्गलाचरणम् । | |
| तृतीयः श्लोकः ... | ३ |
| अत्र कर्तव्यार्थप्रतिज्ञा | |
| चतुर्थः श्लोकः ... | ३ |
| अत्र सगुणमेव ब्रह्म नतु निर्धर्मकमिति मन्वाना माध्वास्तत्वमस्यादिश्रुत्यर्थमन्यथा परिकल्प्यान्यान् भ्रंशयन्तीति प्रतिपादनम् । ... | |
| पञ्चमः श्लोकः ... ... | ४ |
| अत्र तप्तमुद्राधिकारः शूद्रस्योक्तो न तु द्विजानामिति प्रतिपादनम् । मुद्राधारणप्रतिपादकवचनानां तन्त्राधिकारिपरत्वेन व्यवस्थापनम् । तन्त्रेष्वधिकारश्च शूद्रादीनां वेदभ्रष्टादीनां चेति निर्णयः । | |
| षष्ठः श्लोकः ... ... | २१ |
| अत्र पितृपितामहादिपरम्पराप्राप्तं त्रिपुण्ड्रधरणादिवैदिकाचारं परित्यज्यावैदिकं माध्वं मतमभ्युपगच्छतां नरकप्राप्तिर्दर्शिता । | |
| सप्तमः श्लोकः ... ... | २३ |
| अत्र कलिपुरुषः पाखण्डशास्त्राणि विरचय्य लोकान् मोहयामासेति प्रतिपादनम् । | |
| अष्टमः श्लोकः ... ... | २४ |
| तत्र जीवेश्वरयोरैक्यस्य श्रुत्यादिप्रमाणसिद्धत्वप्रतिपादनम् । 'द्वासुपर्णा' इत्यादिश्रुतीनां 'तत्त्वमसि' इत्यादिप्रबलश्रुत्यनुरोधेनौपाधिकभेदानुवादपरतया व्यवस्थापनम् । पैङ्गिरहस्यब्राह्मणेनापि 'द्वासुपर्णा' इति मन्त्रस्यान्यथाव्याख्यातत्वनिरूपणम् । 'येन स्वप्नं पश्यति' इति पैङ्गिरहस्यस्थ 'येन' इति तृतीयान्तपदस्येत्थम्भावार्थकत्वमिति रामानुजीयानां शङ्कां प्रदर्श्य तन्निरासोऽपि दर्शितः । मध्वकल्पितानां ग्रन्थानां निर्देशाः, तद्बलात्तत्कृतलोकमोहनं चाभिहितम् । | |
| नवमः श्लोकः ... ... | २८ |

अत्र माध्वानां हरिहरतारतम्यवादखण्डनम् ।

दशमः श्लोकः ... ... ३२

अत्र माध्वानां श्रीशिवमाहात्म्यप्रतिपादकवचनानां तामसत्वजल्पनायाः श्रीशिव-जीवत्वप्रलापस्य च खण्डनम् ।

एकादशः श्लोकः ... ... ३६

अत्र श्रीशिवनिन्दां कुर्वतां नरकप्राप्तिर्दर्शिता ।

द्वादशः श्लोकः ... ... ३७

अत्र श्रीशिवाराधनेन श्रीकृष्णस्य पुत्रप्राप्तिर्वर्णिता । अर्जुनस्य श्रीशिवराधनेनैव पाशुपतास्त्रप्राप्तिश्च वर्णिता ।

त्रयोदशः श्लोकः ... ... ४१

अत्र श्रीशिवमनादृतवतां दक्षादीनां प्राप्ताया दुःस्थितेर्वर्णनम् ।

चतुर्दशः श्लोकः ... ... ४५

अत्र क्षीराब्धिमथनोद्भूतस्य कालकूटविषस्य धारणेऽत्यन्तमसमर्थानां भीतानां ब्रह्म-विष्ण्वादीनां प्रार्थनया जगदुपकृतये कण्ठे तद्धारणेन श्रीशिवस्य सर्वदेवातिसामर्थ्यं दर्शितम् ।

पञ्चदशः श्लोकः ... ... ४७

तत्र हरिहरयोः सौहार्दं ज्ञात्वाप्यन्यतरं द्विषतो दुरवस्थाप्राप्तिर्वर्णिता ।

षोडशः श्लोकः ... ... ४८

अत्र भार्गवरामः श्रीशिवमाराध्यैव त्रिः सप्तकृत्वो नृपकुलमवधीत् । रघुकुलतिलकः श्रीरामः लिङ्गप्रतिष्ठां कृत्वैवेष्टार्थमाप्तवान्, यद्राजधान्यां काश्यां मृता मुक्तिं प्राप्नुवन्ति । इत्यादिवर्णनेन श्रीशिवस्य सर्वदेवातिशायित्वं दर्शितम् ।

सप्तदशः श्लोकः ... ... ५०

अत्र साक्षाच्छ्रीविष्णुना दर्शितं स्वेश्वरभेदं दृष्ट्वापि कुमतयः श्रीशिवे द्रोहबुद्धिं कुर्वन्तीति कथनम् ।

अष्टादशः श्लोकः ... ... ५१

अत्र श्रीशिवनिन्दकानां नरकप्राप्तिपूर्विका दुःस्थितिर्दर्शिता ।

एकोनविंशः श्लोकः ... ५२

अत्र मध्वोत्पत्तेस्तत्कृतेश्च वर्णनम् ।

विंशः श्लोकः ... ... ५४

अत्र।श्रीहरिहरयोश्चरितस्य दुर्विज्ञेयत्ववर्णनम् ।

एकविंशतितमः श्लोकः ... ५५

अत्र श्रीहरिहरयोश्चरितस्य दुर्विज्ञेयत्वप्रतिपादनम् ।

द्वाविंशः श्लोकः ... ... ५५

तत्र ब्रह्मैवोपाधिवशाद्धरिहरादिव्यपदेशभाग्भवतीति नास्ति वास्तवो भेदस्तयोरिति प्रतिपादनम् ।

त्रयोविंशः श्लोकः... ... ५९

तत्र वाय्वंशभूतयोर्भीमहनुमतोरद्वैत ादित्वे प्रमाणत्वे । व्यासोक्तिमुपन्यस्य तद्द्वारा द्वैतवादित्वेन मध्वस्य वाय्ववतारत्वाभावं सूचितम् ।

चतुर्विंशः श्लोकः... ... ६०

तत्र श्रीहरिहरयोर्वृत्तस्याश्चर्यकरत्वप्रतिपादनम् ।

पञ्चविंशः श्लोकः ... ... ६१

अत्र दुर्विज्ञेयमहिम्नोर्हरिहरयोर्भेदाभावेनान्यतरस्मिन्नपि भक्तिं कुर्वतामस्माकं तद्भेदवादिभिः साकं प्रसङ्गो मास्त्विति प्रार्थना वर्णिता ।

षड्विंशः श्लोकः ... ... ६२

अत्र बौद्धान् जित्वा संन्यासाग्निहोत्रादिवैदिकधर्मं प्रतिष्ठापितवतस्तौतातेर्निन्दां कुर्वतः कृतघ्नत्ववर्णनम् ।

सप्तविंशः श्लोकः ... ... ६३

तत्र परेषामप्रामाणिककल्पनावर्णनम् ।

अष्टाविंशः श्लोकः ... ६४

तत्र ब्रह्मविष्ण्वादिदेवानां वृत्तस्य दुर्विज्ञेयत्वकथनम् ।

ऊनत्रिंशः श्लोकः... ... ६४

अत्राग्न्यादीनां सेवनमपहाय वायुतदंशसेवनस्यानुचितत्वप्रतिपादनम् ।

त्रिंशः श्लोकः ... ... ६५

अत्र वाय्वादीनां परतन्त्रत्वेनोत्पत्तिविनाशशालितया मोक्षप्रदातृत्वं नास्तीति प्रतिपादनम् ।

एकत्रिंशः श्लोकः... ... ६६

अत्र श्रीशिवस्य सर्वोत्तमत्वप्रतिपादनम् ।

द्वात्रिंशः श्लोकः ... ... ६८

अत्र विष्णोरवमकृत्त्ववर्णनम् ।
त्रयस्त्रिंशः श्लोकः ... ... ७०
तत्र पितृपितामहादिपरम्पराप्राप्तवैदिकधर्मपरित्यागवशान्नरकं प्राप्तास्तत्र शान्त्यन्तराभावात् श्रीशिवं संस्मरन्तीति वर्णनम् ।
चतुस्त्रिंशः श्लोकः ... ७०
अत्रार्जुनस्य नारायणात्मत्वादिना भीमापेक्षया पूज्यत्वप्रतिपादनम् ।
पञ्चत्रिंशः श्लोकः ... ... ७१
अत्र परेषां बुद्धिमालिन्याद्वन्याचन्यविवेकशून्यत्वप्रदर्शनम् ।
षट्त्रिंशः श्लोकः ... ... ७२
अत्र वैदिकमार्गविरोधिनो निरूपणम् ।
सप्तत्रिंशः श्लोकः ... ... ७३
अत्रापि वैदिकमार्गविरोधिनो निरूपणम् ।
अष्टत्रिंशः श्लोकः ... ... ७४
अत्र द्वैतमतान्युपेक्ष्य श्रेयोर्थिभिरद्वैतमार्ग एवाश्रयणीय इति प्रतिपादनम् ।
एकोनचत्वारिंशः श्लोकः ... ७५
चत्वारिंशः श्लोकः... ... ७५
एकचत्वारिंशः श्लोकः ... ७६
द्विचत्वारिंशः श्लोकः ... ७७
तत्र श्लोकचतुष्टयेऽपि परसन्न्यासिनस्तत्कृतेश्च वर्णनम् ।
त्रिचत्वारिंशः श्लोकः ... ७८
तत्र माध्वानामानुषदौष्ट्यवर्णनम् ।
चतुश्चत्वारिंशः श्लोकः ... ७९
तत्र माध्वानां सामान्यतो मतस्वरूपं दौष्ट्यं च प्रदर्शितम् ।
पञ्चचत्वारिंशः श्लोकः ... ८०
अत्र मध्वपदव्युत्पत्तिर्दर्शिता ।
षट्चत्वारिंशः श्लोकः ... ८१
अत्र श्रुतावपि मध्ववाचः प्रशंसेति परप्रलापस्य निराकरणम् ।
सप्तचत्वारिंशः श्लोकः ... ८२
अत्रानादिश्रुतावद्यतनस्य मध्वस्य वार्तापि नास्तीति प्रतिपादनम् ।

अष्टचत्वारिंशः श्लोकः ... ८३
अत्र 'अस्य मध्वः पिबत' इतिश्रुतिस्थो मध्वशब्दः पराभिप्रेतार्थको नैवेति प्रतिपादनम् । ...
एकोनपञ्चाशत्तमः श्लोकः ... ८३
अत्र मध्वनिवासस्थानाभिधानस्य मतप्रवर्तनस्यापि भाषानामविपर्यासमूलकत्वप्रतिपादनम् ।
पञ्चाशत्तमः श्लोकः... ... ८४
अत्र पञ्चभूतानां लोकपालानां चाराधनाभावे तदन्तर्गतस्य वायोः सेव्यत्वं नास्तीति प्रतिपादनम् ।
एकपञ्चाशत्तमः श्लोकः ... ८४
अत्र पञ्चभूतसमुदायस्य लोकपालसमुदायस्य च पूजाभावेऽपि तत्समुदायान्तर्गतस्याग्नेरिव वायोः सेव्यत्वमस्त्वित्याशङ्काया निराकरणम् ।
द्विपञ्चाशत्तमः श्लोकः ... ८५
तत्र हनुमत आराधनं श्रीसीतावरप्राप्तं तथा भीमसेनस्याराधनं न क्वापि विहितमिति प्रतिपादनम् ।
त्रिपञ्चाशत्तमः श्लोकः ... ८५
अत्र हनुमत आराधनस्य सम्प्रतिपन्नत्वेन वायुपुत्रविशेषतस्तस्य भीमसञ्ज्ञाङ्गीकारे भीमस्याराधनमप्यर्थात्सिद्धमित्याशङ्कायानिरसनम् ।
चतुःपञ्चाशत्तमः श्लोकः ... ८६
अत्र कर्णयुधिष्ठिरयोः सूर्ययमांशत्वेऽपि यथा पूज्यता नास्तितथा भीमस्य वायुपुत्रत्वेऽप्याराधनं नास्तीति प्रतिपादनम् ।
पञ्चपञ्चाशत्तमः श्लोकः ... ८७
अत्र मध्वस्य वाय्ववतारत्वनिराकरणम् ।
षट्पञ्चाशत्तमः श्लोकः ... ८८
सप्तपञ्चाशत्तमः श्लोकः ... ८८
अत्र श्लोकद्वयेऽपि परमतस्यासन्नविनाशित्ववर्णनम् ।
अष्टपञ्चाशत्तमः श्लोकः ... ८९
अत्रैहिकसुखाभिलाषिणः पापिनश्च माध्वं मतमनुसरन्तीति वर्णनम् ।
एकोनषष्टितमः श्लोकः ... ८९

षष्टितमः श्लोकः ... ... ८९
एकषष्टितमः श्लोकः ... ९०
द्विषष्टितमः श्लोकः ... ९०
अत्र श्लोकचतुष्टयेऽपि माध्ववर्णनम् ।
त्रिषष्टितमः श्लोकः ... ९०
अत्राद्वैतस्तवनिन्दकानां फलनिरूपणम् ।
चतुः षष्टितमः श्लोकः ... ९१
अत्राद्वैतस्तवपठनफलनिरूपणम् ।
पञ्चषष्टितमः श्लोकः ... ९२
अत्राद्वैतस्तवं पाठयतां श्रुण्वतां च फलनिरूपणत् ।

**इति विषयानुक्रमणिका समाप्ता·**

श्रीः

# अद्वैतस्तवः

## ज्ञानाञ्जनेषिकाख्यया व्याख्यया सँव्वलितः

सत्यं ज्ञानमनन्तं यत्परमे व्योम्नि संस्थितम् ।
निर्विशेषं परं ब्रह्म भावये तन्निरन्तरम् ॥१॥

यतो विश्वं विश्वं समभवदिदं जीवति यतो
लयं यस्मिन् याति प्रकृतिवलितं तं पराशिवम् ।
उपाधेर्वैचित्र्याद्विधिहरिहराद्याकृतिचयान्
दधानं ध्यायामि त्रिदशमुनिसङ्घस्तुतपदम् ॥२॥

यस्याः प्रसादलेशेन स्वात्मानं मुनयो विदुः ।
साक्षात्कुर्वन्ति कवयो जगत्तां नौमि भारतीम् ॥३॥

श्रीमत्पित्रोश्चरणान्मुक्तिप्रदपार्वतीशपदविमलान् ।
अष्टोत्तरशतवारं नमामि विनयेन सत्वशुद्ध्यर्थम् ॥४॥

द्वैतध्वान्तदिवाकरे श्रुतिशिरः क्षीराब्धिरात्रीश्वरे
वादिव्यूहनगेन्द्रभेदभिदुरे ज्ञानप्रदे शङ्करे ।
मायाकल्पितमोहकक्षदहने र्भाव्यमाने मया
श्रीमच्छङ्करदेशिकाङ्घ्रिकमलद्वन्द्वे शिरःस्थाप्यते ॥५॥

श्रीनीलकण्ठविदुषो गुरून् श्रीरामशास्त्रिणः ।
श्रीवासुदेवविदुषो वन्दे विद्याब्धिमन्दरान् ॥६॥

यन्नामश्रवणादेव द्वैतिनो हि दिशो दश ।
पलायन्ते गुरून् वन्दे बिभ्राणान् सुन्दराभिधाम् ॥७॥

अद्वैतस्तवनाम्नो ग्रन्थस्यास्य प्रतन्यते व्याख्या ।
ज्ञानाञ्जनेषिकाख्या ध्वान्तानां बोधसिद्धये सुखतः ॥८॥

तत्रभवान् श्रीरघुनाथसूरिः प्राक्तनानेकजन्मार्जितपापकलापकलुषितमतिना केन चित्-त्रिविक्रमाख्येन कृतायाःश्रीपरमेश्वरतद्भक्तनिन्दासंदृब्धायावायुस्तुतेःप्रत्याचिख्यासया श्री-अद्वैतस्तवनामानं ग्रन्थं चिकीर्षुः'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्'(भामहः)इति शास्त्रात् , ग्रन्थादौ निर्विघ्नपरिसमाप्तिप्रचयगमनादिफलकं नमस्कारलक्षणं मङ्गलमारचयति-

**जगत्सर्गावनापायहेतवे व्यक्तिमीयुषे ।**
**गुणत्रयजुषे तस्मै कस्मैचिन्महसे नमः ॥१॥**

जगदिति । जगत्सर्गावनापायहेतवे—जगतः सर्गः सृष्टिः, अवनं परिपालनं, अपायो नाशस्तेषां हेतवे,'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति' (तै. ३।१।१) 'यतः सर्वाणि भूतानि' (वि. स. ११) 'जन्माद्यस्य यतः' (ब्र. सू. १।१।२)इत्यादिश्रुतिस्मृतिसूत्रादिभ्यः । एतेन ब्रह्मणस्तटस्थलक्षणमुक्तं भवति। गुणत्रयजुषे-गुणानां सत्वरजस्तमसां त्रयं गुणत्रयात्मिकां मायामित्यर्थः,जुषते इति तस्मै 'जुषी प्रीतिसेवनयोः' (धा. ६।८) इति पाणिनिस्मरणात्, मायोपहितायेत्यर्थः। अत एव व्यक्तिं—मूर्तिमाकारमिति यावत्। ईयुषे प्राप्तवते 'शुद्धस्फटिकसंकाशं त्रिनेत्रम्' इत्यादिना वर्णितरूपमुपगतवत इत्यर्थः। कस्मैचित्-अनिर्वाच्याय 'यतो वाचो निवर्तन्ते अप्राप्यमनसा सह' ( तै. २।९) इत्यादिश्रुतेः। महसे—तेजःस्वरूपाय प्रकाशस्वरूपाय ज्ञानस्वरूपायेति यावत् । एतेन ब्रह्मणः स्वरूपलक्षणमुक्तं भवति । 'सत्यं ज्ञानमनन्तम्' (तै. २।१)इत्यादि तैत्तिरीयश्रुतौ प्रत्येकस्यापि स्वरूपलक्षणत्वेनाभ्युपगमात्। तस्मै—तत्पदलक्ष्यायेत्यर्थः। नमः —प्रह्वीभावोस्तु। अत्रायं भावः—यत् सच्चिदानन्दाद्वयं ब्रह्मैव मायोपहितं सत् जगत्कारणभावं प्रतिपद्यते तस्मै प्रह्वीभावोऽस्त्विति ॥१॥

**नमस्तस्मै नमस्तस्मै नमस्तस्मै च शम्भवे ।**
**श्रीमच्छङ्करतीर्थाय सुज्ञाननिधये नमः ॥२॥**

नम इति । शं शुखं भवत्यस्मादिति शुम्भुस्तस्मै नमः । 'नमस्तस्मै' इति त्रिरुक्तिर्मनोवाक्कायैः प्रह्वीभावबोधनार्था, आध्यात्मिकादितापत्रयपरिशान्त्यर्था, भक्त्यतिशयद्योतनार्था वा । श्रीमच्छङ्करतीर्थाय- शम्-अविनाशि सुखम् निःश्रेयसमिति यावत्, स्वस्वरूपोपदेशेन स्वाभाविकाज्ञाननिरसनपुरःसरं निःश्रेयसलक्षणं सुखं करोतीति शङ्करः, श्रीमांश्चासौ शङ्करश्च, स चासौ तीर्थः उपाध्यायो गुरुरित्यर्थः । 'तीर्थं शास्त्रेऽध्वरे क्षेत्रोपायोपाध्यायमन्त्रिषु । योनौ जलावतारेषु मन्त्राद्यष्टादशस्वपि' इति विश्वः । तस्मै नमः ॥२॥

इदानीमत्र कर्थव्यार्थं प्रतिजानीते—

वायुस्तुत्यवलिप्तानां माध्वानां मतभञ्जनम् ।
करोम्यद्भुतमद्वैतस्तवमीश्वरनोदितः ॥३॥

वाय्विति । ईश्वरनोदितः—ईश्वरेण नोदितः प्रेरितोऽहमिति शेषः । वायुस्तुत्यवलिप्तानाम्—वायुस्तुत्या त्रिविक्रमकृतया वायुस्तुत्या अवलिप्तानाम् दर्पवतां माध्वानाम्, मतभञ्जनम्- मतखण्डनरूपम्, अद्भुतम् आश्चर्यकरम् अद्वैतस्तवं करोमि । ग्रन्थरचनाविषयस्य बुद्धिस्थत्वेन करोमीति वर्तमानकालव्यपदेशो न विरुद्ध्यते 'वर्तमानसामीप्ये वर्तमानवद्वा' ( पा॰ सू, ३।३।१३ ) इति स्मृतेः ॥३॥

अद्वैतस्तवं प्रक्रमते—

शुद्धे ब्रह्मण्यखण्डे गुणदुरधिगमे निर्विकारे परस्मि-
न्नद्वैते भावशून्ये विरचितसगुणब्रह्मजल्पा दुरूहाः ।
वेदार्थैरन्यथोक्तैर्निजमतिकलितैस्तत्त्वमस्यादिवाक्यै-
र्माध्वा धर्मध्वजाग्र्याः कतिपयजनतां भ्रामका भ्रंशयन्ति ॥४॥

शुद्ध इति । शुद्धे—अज्ञानमलवर्जिते, अखण्डे—एकरसे, अत एव गुणदुरधिगमे—सत्वादिगुणरहिते, प्रकृतिसंबन्धशून्ये निरुपाधिक इति यावत् । यद्वा, गुणैः सत्वादिभिः दुरधिगमे दुष्प्राप्ये गुणकर्तृकप्राप्तिशून्ये, निर्गुणे, इति यावत् । यद्वा गुणैः—करणैर्दुरधिगमे दुष्प्राप्ये 'गुणा गुणेषु वर्तन्ते' ( गी. ३।२८ ) इत्यत्र गुणपदस्य करणार्थकत्वस्मरणात् । निर्विकारे—जन्मादिविकाररहिते, अत एव भावशून्ये—निर्धर्मके, अद्वैते-सजातीयद्वितीयरहिते सजातीयविजातीयस्वगतभेदत्रयशून्य इति यावत् । 'एकमेवाद्वितीयम्' ( छा. ६।२।१ ) इति मन्त्रवर्णात् । परस्मिन्, ब्रह्मणि, विरचितसगुणब्रह्मजल्पाः-विरचिताः सगुणमेव ब्रह्मेति जल्पा यैस्ते तथोक्ताः, दुरूहाः— दुष्टा वेदविरुद्धा ऊहास्तर्का येषां ते तथोक्ताः भ्रामकाः— भ्रमोत्पादकाः, धर्मध्वजग्र्याः—धर्मध्वजानां दाम्भिकानामग्र्याः— अग्रे भवा अग्र्याः श्रेष्ठाः, दाम्भिकमूर्धन्या इत्यर्थः । धर्मध्वजी लिङ्गवृत्ति' ( २।७।५४) इत्यमरः । माध्वाः—मध्वानुयायिनः, निजमतिकलितैः निजमत्या न तूपक्रमोपसंहारादितात्पर्यनिर्णायकप्रमाणेनेति भावः, कलितैः परिकल्पितैः, अत एव अन्यथोक्तैः—अन्यथोक्तिर्व्याख्यानं येषां तैः, वेदार्थैस्तत्त्वमस्यादिवाक्यैश्च, कतिपयजनताम्, भ्रंशयन्ति कतिपयाश्चते जनाश्च तेषां समूहः कतिपयजनता ताम्, पितृपितामहादिपरम्पराप्राप्तवैदिकमार्गाच्चयावयन्तीति भावः ॥४॥

इदानीं माध्वानामवैदिकाचारं दर्शयति—

धर्मोऽयं ह्येकजातेः स्मृतिषु निगदितस्तप्तमुद्राधिकारो
नोक्तो जातु द्विजातेर्निगममयतनोस्तप्यतोऽलं तपांसि ॥
सम्बद्धा मोहपाशैः पशव इव नवान्यङ्कनान्याददाना-
स्त्यक्तप्राग्धर्ममार्गाः कथमिव दधते तप्तलोहानि काये ॥५॥

धर्म इति। अयं तप्तमुद्राधिकारः—तल्लक्षणो धर्मः, स्मृतिषु, एकजातेः—शूद्रस्य निगदितः उक्तः, हि—प्रसिद्धम्। तपांसि—कृच्छ्रचान्द्रायणादीनि अलं तप्यतः, निगममयतनोः—निगमैःवेदैःप्रचुरा निगममयी, अत्र वेदप्राचुर्ये वदिकसंस्कारसंस्कृतत्वमध्ययनाधिकारसिद्धवेदग्रहणवत्वं च, निगममयी तनुर्यस्य तथोक्तस्य, यद्वा, निगमाः—देवास्तत्प्रचुरा तनुर्यस्य तथोक्तस्य, 'यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति' (आ. २।१५) इति श्रुतेः। 'निगमो निश्चये पुर्या देवे वेदे तदङ्गके' इति कोशात्। द्विजातेः— ब्राह्मणस्य, ब्राह्मणादित्रर्णत्रयस्य वा, जातु—कदाचिदपि, नोक्तः प्रत्युत प्रतिषिद्धः। इत्थं सति मोहपाशैः—मोहा अज्ञानरूपाः पाशाःरज्जवस्तैः संबद्धाः—सम्यक् दृढं बद्धाः सन्तः, अत्र बन्धने सम्यक्त्वं च सदुपदेशेनापि स्वीकृतदुर्मार्गादशक्यनिवर्तनत्वम्। काये देहे, 'कायो देहः क्लीबपुंसोः' (२।६।७१) इति देहपर्यायेऽमरसिंहः। नवानि—स्वमत्या परिकल्पितानि न तु श्रुतिमन्वादिशास्त्रप्रणीतानि, अङ्कनानि चक्रादिचिह्नान्याददानाः स्वीकुर्वाणाः, त्यक्तप्राग्धर्ममार्गाः—त्यक्तः समुज्झितः प्राक् प्राचीनः पितृपितामहादिपरम्पराप्राप्तः, धर्ममार्गः—श्रुतिमन्वादिशास्त्रप्रणीतोधर्ममार्गो यैस्ते तथोक्ताः सन्तः त्यक्तप्राग्धर्ममार्गास्तु जातिभ्रष्टा एव। तथा च स्मर्यते मनुना—

'वरं स्वधर्मो विगुणो न पराक्यः स्वनुष्ठितः॥
परधर्मेण जीवन् हि सद्यःपतति जातितः' (म. स्मृ. १०।९७)

इति। एवं पितृपितामहादिपरम्परागतमार्षं धर्मं परित्यज्य पारक्यं धर्ममनुतिष्ठतो जातिपातित्यं दण्डं च स्मृत्वा कर्मविपाकप्रकरणे तस्य वान्ताशित्वादिदैन्यप्राप्तिर्दर्शिता—

'वान्ताश्युल्कामुखप्रेतो विप्रो धर्मात्स्वकाच्च्युतः।' (म.स्मृ. १२।७१)

इति। इत्थं सति ये के च न त्यक्तप्राग्धर्ममार्गैरत एव जातिपतितैः साकं कन्यादानादिभोजनप्रतिभोजनादिवैदिकलौकिकव्यवहारं कुर्वन्ति, स च तेषां व्यवहारः

शास्त्रविरुद्धत्वादप्रामाणिकं गर्हणमर्हतीति विदाङ्कुर्वन्तु विद्वांस इति । कथमिव—कथं नु तप्तलोहानि—लोहनिर्मितानि तप्तानि चक्रादिचिह्नानि, पशवः— वृषभादय इव दधते॥

अत्र तावत्परामृश्यते मुद्राधारणे कोऽधिकारीति । तत्र विचार्यमाणे हि पाञ्चरात्रादितन्त्रावलम्बिनो मुद्राधारणेऽधिकारिणः, पाञ्चरात्रादितन्त्रेषु च श्रीब्रह्मगौतमादिभिः शप्ता वेदभ्रष्टाः कुण्डगोलकादयः सङ्करजातयः शूद्रादयश्चाधिकारिण इति परमप्रामाणिकेभ्योऽत्यन्तप्रसिद्धेभ्य आर्षग्रन्थेभ्योऽवगम्यते । तन्त्राधिकारिणस्तावन्निरूप्यन्ते लिङ्गस्कन्दकूर्मादिपुराणेषु । तथा हि, लिङ्गपुराणे —

‘ पाञ्चरात्रं भागवतं तथा वैखानसाभिधम् ।
वेदभ्रष्टान्समुद्दिश्य कमलापतिरुक्तवान् ॥ ’

इति वचनेन पाञ्चरात्रादिदीक्षाया वेदभ्रष्टाधिकारिकत्वं सुस्पष्टमभिहितम् । पराशरोपपुराणे तृतीयेऽध्याये ब्रह्मशाप उक्तः,—

‘ रुद्राधिक्यमविज्ञाय ब्रह्मनारायणौ पुरा ।
अहं त्वहं चेति तदा विभ्रान्त्या कुरुतां रणम् ॥
क्रोधेन महता युक्तो ब्रह्मा सर्वजगत्पतिः ।
शशाप विष्णुं गर्भस्थो ’

इत्यादिना शापं प्रस्तुत्य,

‘ त्वद्भक्ता ब्राह्मणाः साक्षात्त्रिपुण्ड्रे भस्मगुण्ठने ।
भवेयुर्विमुखा नित्यं वेदसिद्धे विमुक्तिदे ॥
त्रिशूले चतुरस्रे च वेणुपत्रोपमे तथा ।
पुण्ड्रान्तरे रता नित्यं भवेयुस्तान्त्रिका द्विजाः ॥
आयुधैः शङ्खचक्राद्यैस्त्वदीयैरङ्किता द्विजाः ।
अभितप्तैर्महामोहाद्भवेयुश्चांसयोर्द्वयोः ॥
त्वदीये पाञ्चरात्रे च तन्त्रे भागवते तथा ।
दीक्षिताश्च द्विजा नित्यं भवेयुर्गर्हिता हरे ॥
श्रौतस्मार्तसदाचारे सद्यो मुक्तिकरे शुभे ।

त्वद्भक्ता विमुखा नूनं भवेयुः परिमोहिताः ॥'

इत्यादिवचनैर्ब्रह्मशप्तानां तन्त्रेष्वधिकारोऽर्थात्तेषामेव च मुद्राधारणेऽधिकारः स्पष्टमुक्तः। कौर्मे चतुर्दशेऽध्याये गौतमशापो वर्णितः–

' स तेषां मायया जातगोवध्यो गौतमो मुनिः।
केनापि हेतुना ज्ञात्वा शशापात्यन्तकोपनः ॥
भविष्यध्वं त्रयीबाह्या महापातकिभिःसमाः।'

इत्यादिना गौतमशापं प्रकृत्य,

' सर्वे संप्राप्य देवेशं शङ्करं विष्णुमव्ययम्।
अस्तुवँल्लौकिकैः स्तोत्रैः'

इत्यादिना हरिहरौ प्रति कृतां गतिप्रार्थनां वर्णयित्वा,

' तस्माद्वै वेदबाह्यानां रक्षणार्थं च पापिनाम्।
विमोहनाय शास्त्राणि करिष्यावो वृषध्वज ॥
एवं संबोधितो रुद्रो माधवेन मुरारिणा ॥
चकार मोहशास्त्राणि केशवोऽपि शिवेरितः।
कापालं मुद्गलं वामं भैरवं पूर्वपश्चिमम् ॥
पाञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः।
सृष्ट्वा तानूचतुर्देवौ कुर्वाणः शास्त्रचोदितम।
पतन्तु नरके घोरे बहून् कल्पान्पुनः पुनः।'

इत्यादि वचनजातैः गौतमशप्तानां गतिप्राप्त्यर्थमेव पाञ्चरात्रादितन्त्रप्रणयनं तत्र प्ररोचनार्थं वेदचतुष्टयेऽपि परमपुरुषार्थमप्राप्य शाण्डिल्य इमां तन्त्रविद्यामधिगतवानित्यादिवर्णनक्रमेण तेषां तन्त्राणामवैदिकत्वं प्रदर्शितम। स्कन्दपुराणे यज्ञवैभवखण्डे द्वात्रिंशेऽध्याये—

' गौर्हता गौतमेनेति निर्घृणैः पुरुषाधमैः।
कृतो मिथ्याभिशापस्तु महामोहवशेन तु ॥
तज्ज्ञात्वा मुनिभिः श्रीमान् गौतमो मुनिसत्तमः।

महाक्रोधेन संयुक्तः शशाप ब्राह्मणाधमान् ॥

गौतम उवाच–

महादेव स्वरूपे च महादेवस्य विग्रहे । '

इत्यादिना गौतमशापं प्रस्तुत्य,

' श्रुतिस्मृतिपुराणोक्तेष्वर्थेषु सकलेषु च ।
भवतानुन्मुखा यूयं सर्वदा ब्राह्मणाधमाः ॥
स्वदारगमने चैव परदाराविवर्जने ।
भवतानुन्मुखा यूयं सर्वदा ब्राह्मणाधमाः ।
विष्णवादिदेवताः सर्वा विशिष्टाः शङ्करादिति ।
भ्रान्तिविज्ञानसंपन्ना भवत ब्राह्मणाधमाः ॥
शङ्खचक्रगदापद्मदण्डपाशाङ्कुशादिभिः ।
अङ्किताः श्रद्धया यूयं भवत ब्राह्मणाधमाः ॥
विहीनजातिनाम्ना तु रूपेण च तथैव च ।
अङ्किताः श्रद्धया यूयं भवत ब्राह्मणाधमाः ॥
वर्तुलाश्वत्थपत्रार्धचन्द्रदीपादिलिङ्गिनः ।
भवत श्रद्धया सार्धं ललाटे ब्राह्मणाधमाः ॥
पितृमातृसुतभ्रातृभार्याविक्रयिणः सदा ।
बन्धुविक्रयिणस्तद्वद्भवत ब्राह्मणाधमाः ॥
वेदविक्रयिणस्तद्वत्तीर्थविक्रयिणस्तथा ।
धर्मविक्रयिणस्तद्वद्भवत ब्राह्मणाधमाः ॥
सुराविक्रायिणस्तद्वत्मांसविक्रयिणस्तथा ।
मत्स्यविक्रायिणस्तद्वद्भवत ब्राह्मणाधमाः ॥
पाञ्चरात्रे च कापाले तथा कालमुखेऽपि च ।
शाक्ते च दीक्षिता यूयं भवत ब्राह्मणाधमाः ॥

बौद्धे चार्हन्मते चैव तथा पाशुपतेऽपि च ।
शाम्भवे दीक्षिता यूयं भवत ब्राह्मणाधमाः ॥
पाखण्डेषु तथान्येषु मार्गेष्वश्रौतकेषु च ।
श्रद्धया दीक्षिता यूयं भवत ब्राह्मणाधमाः ॥
युष्माकं वंशजाताश्च सर्वे स्त्रीभिः सह द्विजाः ।
मदुक्तार्थप्रकारेण भवन्तु ब्राह्मणाधमाः ॥
बहुनोक्तेन किं साक्षाच्छिवे संसारमोचके ।
तत्संबन्धिषु सर्वेषु श्रुतिस्मृत्यादिकेषु च ॥
युष्माकं वंशजातानां युष्माकं च तथैव च ।
श्रद्धाभावः सदैवास्तु शापस्तीव्रः कृतो मया ॥ '

इत्यादिनोपसंहृतः सौरपुराणे सप्तमेऽध्याये–

' दधीचिरुवाच–

एते च ब्राह्मणाः सर्वे ये द्विषन्तो महेश्वरम् ।
भवन्तु वेदबाह्यास्ते तमोपहतचेतसः ॥
पाखण्डाचारनिरताः सर्वे निरयगामिनः । '

इति दधीचिशापो वर्णितः। ततश्च शापग्रस्ता वेदभ्रष्टाश्च तन्त्रेष्वधिकारिण इत्यतिरोहितं प्रेक्षावताम् । तथा च सूतसंहितायाम्–

' अत्यन्तस्खलितानां च द्विजानां वेदमार्गतः ।
पाञ्चरात्रादयो मार्गाः कालेनैवोपकारकाः ॥ '

इति । तत्रैव च–

' श्रुतिपथरहितानां मानुषाणां हितार्थं
हरिरपि मुनिमुख्याः प्राह तन्त्रं स्वकीयम् ॥
श्रुतिपथनिरतानां तन्न सेव्यं हि नित्यं
श्रुतिपथसममार्गो नैव सत्यं मयोक्तम् ॥

इति । तत्रैव यज्ञवैभवखण्डे पञ्चचत्वारिंशेऽध्याये, आगमान् प्रकृत्य,—

अधिकारिविशेषेण क्रमेणैव विमुक्तये ।
प्रवर्तन्ते मुनिश्रेष्ठाः सत्यमेव मयोदितम् ॥
तत्तत्तन्त्रेषु ये मर्त्या दीक्षिता मुनिसत्तमाः ।
सोंऽशस्तैरेव संग्राह्यः सर्वथा नैव वैदिकैः ॥ '

इति । कूर्मपुराणे सप्तविंशेऽध्याये—

' यतयश्च भविष्यन्ति शतशोऽथ सहस्रशः ।
नाशयन्ति ह्यधीतानि नाधिगच्छन्ति वानघ ॥
गायन्ति लौकिकैर्गानैर्दैवतानि नराधिप ।
वामाः पाशुपताचारास्तथैव पाञ्चरात्रकाः ॥
भविष्यन्ति कलौ तस्मिन्ब्राह्मणाः क्षत्रियास्तथा । '

इत्याद्युपक्रम्य,

दधीचिशापनिर्दग्धाः पुरा दक्षाध्वरे द्विजाः ।
निन्दन्ति च महादेवं तमसाविष्टचेतसः ॥
वृथा सर्वं चरिष्यन्ति कलौ तस्मिन्युगान्तिमे ।
ये चान्ये शापनिर्दग्धा गौतमस्य महात्मनः ॥
सर्वे चेह भविष्यन्ति ब्राह्मणाद्यासु जातिषु ।
विनिन्दन्ति महादेवं ब्राह्मणा ब्रह्मवादिनः ॥
वेदबाह्यव्रताचारा दुराचारा वृथाश्रमाः ।
मोहयन्ति जनान्सर्वान्दर्शयित्वा फलानि तु ॥
तमसाविष्टमनसो बैडालव्रतिकाधमाः ।'

इति । पराशरोपपुराण एकादशेऽध्याये—

शङ्खचक्रगदापद्मवज्रपाशाङ्कुशादिभिः ।
अङ्किताश्च भविष्यन्ति मनुष्याः पापकर्मणा ॥

पाञ्चरात्रे च कापाले पाखण्डेष्वपरेषु च ।
दीक्षिताश्च भविष्यन्ति मनुष्याः पापकर्मणा ॥'

इति । साम्बपुराणे–

' श्रुतिभ्रष्टः श्रुतिप्रोक्तप्रायश्चित्ते भयङ्गतः ।
क्रमेण श्रुतिसिद्ध्यर्थं मनुष्यस्तन्त्रमाश्रयेत् ॥
धर्मशास्त्रे पुराणे च प्रोक्तं हि मरणान्तिकम् ।
प्रायश्चित्तं मनुष्याणां पापिष्ठानां सुदारुणम् ॥
भयं दुर्बलचित्तानां मरणाज्जायते भृशम् ।
तेषामेवाभिरक्षार्थं खल्वहं तन्त्रमुक्तवान् ॥'

इत्यादिवचनकलापैः पापविशेषस्यापि तन्त्रमार्गप्रवेशहेतुत्वं सुस्पष्टमभिहितम् । कूर्मपुराणे पूर्वभागे चतुर्विंशेऽध्याये संकरजातानामपि तन्त्रेष्वधिकारोऽभिहितः । तथा हि–

' अथांशोरन्धको नाम विष्णुभक्तः प्रतापवान् ।
महात्मा दाननिरतो धनुर्वेदविदां वरः ॥
स नारदस्य वचनाद्वासुदेवार्चने रतः ।
शास्त्रं प्रवर्तयामास कुण्डगोलादिभिः श्रितम् ॥
तस्य नाम्ना तु विख्यातं सात्वतंनाम शोभनम् ।
प्रवर्तते महच्छास्त्रं कुण्डादीनां हितावहम् ॥'

इति ।

' शृणु राम महाबाहो लिङ्गचक्रादिधारिणाम् ।
शूद्रधर्मरतानां हि तेषां नास्ति पुनर्भवः ॥
विप्रस्यैतद्विगर्ह्यत्वात्प्रायश्चित्तमुदीरितम् ।'

इति हेमाद्रिप्रायश्चित्तकाण्डधृतपद्मपुराणवचने ' शूद्रधर्मरतानाम् ' इत्युक्त्या कुण्डगोलकयोरप्यधिकारः प्राप्यते ।

शूद्राणां हि सधर्माणःसर्वेऽपध्वंसजाः स्मृताः ।'

इति स्मृतिवचनेन तेषां शूद्रधर्मातिदेशस्य स्पष्टत्वात् । शूद्राणांतु तन्त्रधर्मरतत्वं स्पष्टमेव ।भागवते दशमस्कन्धे स्त्रीशूद्रयोस्तन्त्राधिकारोऽभिहितः । तथा हि—

'तेनोक्तं सात्वतं तन्त्रं यज्ज्ञात्वा मुक्तिभाग्भवेत् ।
यत्र स्त्रीशूद्रदासानां संस्कारो वैष्णवःस्मृतः ॥'

इति । तन्त्राधिकारनिर्णये,—आश्वलायनस्मृतौ षष्ठेऽध्याये—

शिवकेशवयोश्चिह्नं चक्रशूलादिकं द्विजः ।
न धारयेत मतिमान्वैदिके वर्त्मनि स्थितः ॥
त्यक्तवैदिककर्माणो नास्तिका नटनर्तकाः ।
ते धारयेयुश्चिह्नानि शिवयोर्भिन्नबुद्धयः ॥
वेदाक्षरविहीनानां नास्तिकानां द्विजन्मनाम् ।
विहितं धारणं नित्यं चिह्नानां केशवेशयोः ॥
तेषां भिन्नधियां किञ्चित्सुगत्यर्थे शिवःपुरा ।
कृपया तच्चकारेह पुराणेषूदितं च तत् ॥

इति । किञ्चिदिति तन्त्रमित्यर्थः । इहेति स्मृतिष्वित्यर्थः । चकारो भिन्नक्रमः, पुराणेषु चेती योजनीयः । अत एव स्मृतिपुराणयोरपि क्वचित्तन्त्रसमानविषयत्वं पराशरपुराणे दशमेऽध्याये स्पष्टीकृतम्—

वेदमूलतया नित्यं प्रवृत्ता अपि सत्तम ।
क्वचित्कदाचित्स्मर्तारस्तन्त्रार्थं च ब्रुवन्ति वै ॥
क्वचित्तन्त्रानुरोधेन धर्मं पौराणिका अपि ।
वदन्ति तादृशोंऽशस्तु ग्राह्यस्तन्त्रावलम्बिना ॥
पुराणे धर्मशास्त्रे च योंऽशः श्रुत्या विरुद्ध्यते ।
स तन्त्रार्थस्तु विज्ञेयः समासेन मनीषिभिः ॥

इति । स्कान्देऽपि—

तन्त्रावलम्बनेनैव पुराणानि च कानि चित् ।
साक्षाद्वेदविरुद्धार्थं प्रवदन्ति क्वचित् क्वचित् ॥

अधिकारिविभेदेन नैव वेदपरं प्रति ।

अधिकारीति भ्रष्टाद्यधिकारीत्यर्थः ॥' इति ।

तदेवं समुपदर्शितेभ्यः परमाप्तवचनेभ्यः श्रीब्रह्मगौतमादिभिः शप्ता वैदिकमार्गभ्रष्टाः पतिताःपापिनः कुण्डगोलकाः सङ्करजाताः शूद्राश्च पाञ्चरात्रादितन्त्रेष्वधिकारिणोऽर्थात्त एव च मुद्राधारणेऽधिकारिण इति स्थितम् । वैदिकब्राह्मणान्प्रति मुद्राधारणप्रतिषेधप्रतिपादकानि तद्धारणे प्रायश्चित्तप्रतिपादकानि, तदननुष्ठाने तु नरकप्राप्तिप्रतिपादकानि, परःसहस्राणि वचनानि सन्ति तथाप्यत्र विस्तरभिया दिङ्मात्रं प्रदर्श्यंते–

विष्णुः–

' शङ्खचक्राद्यङ्कनं च नृत्यगीतादिकं तथा ।
एकजातेरयं धर्मो न जातु स्याद् द्विजन्मनः ॥
यथा स्मशानजं ( गं ) काष्ठं सर्वकर्मसु गर्हितम् ।
तथा चक्राङ्कितो विप्रः सर्वकर्मसु गर्हितः ॥
शङ्खचक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा ।
स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः ॥
इत्येतां तु ममानुज्ञां विलङ्घ्य विहगेश्वर ।
सर्वेषामङ्कनं कृत्वा मोहशास्त्रानुसारतः ॥
पतिष्यन्ति नरा घोरे नरके कलिसम्भवाः ।
तस्मादेतन्न कर्तव्यमङ्कनं ब्राह्मणैः क्वचित् ॥ '

इति । शातातपः–

' अङ्गेषु नाङ्कयेद्विप्रो देवतायुधलाञ्च्छनैः ।
अङ्कयेद्यदि वा मोहात्पतत्येव न संशयः ॥

इति । हारीतः–

' रागसन्दिग्धगात्राणां न स्यात्पावित्रकं शुभम ।

इति । यमः–

' नाङ्कनाय दहेद्गात्रं देवतायुधलाञ्च्छनैः ।

दहनाल्लेखनाद्विप्रः पातित्यं याति तत्क्षणात् ॥'

इति । बोधायनः—

' नाङ्कनाय दहेद्गात्रं दहेच्चेत्कामकारतः ।
नाधिकुर्वन्ति दग्धाङ्गाः श्रौतस्मार्तेषु कर्मसु ॥'

इति । ब्रह्मपुराणे दशमेऽध्याये:—

' तप्तमुद्रा ह्यन्त्यजाय हरिणा निर्मिता पुरा ।
भूदेवस्तप्तमुद्रां तु चिह्नं कृत्वा विमूढधीः ॥
इह जन्मनि शूद्रः स्यात्प्रेत्य श्वा च भविष्यति ।'

इति । सूतसंहितायां यज्ञवैभवखण्ड एकचत्वारिंशेऽध्याये—

' पाशाङ्कुशगदादण्डशङ्खचक्रादिभिर्द्विजाः ।
अङ्कनं विग्रहे सन्तः पातकं प्राहुरास्तिकाः ॥'

इति । बृहन्नारदीये चतुर्थेऽध्याये—

' यस्तु सन्तप्तशङ्खादिलिङ्गचिह्नतनुर्नरः ।
स सर्वयातनाभोगी चण्डालः कोटिजन्मसु ॥
ये द्विजं तप्तशङ्खादिलिङ्गाङ्किततनुं नृप ।
संभाष्य रौरवं यान्ति यावदिन्द्राश्चतुर्दश ॥
चक्राङ्किततनुर्यत्र तत्र कोऽपि न संवसेत् ।
यदि तिष्ठेन्महापापी सहस्रब्रह्महा भवेत् ॥
गङ्गास्नानरतो वापि अश्वमेधरतोऽपि वा ।
चक्राङ्किततनुं स्पृष्ट्वा ( दृष्ट्वा ) पश्येत्सूर्यं नरेश्वर ॥
जपेच्च शतरुद्रीयमन्यथा रौरवं व्रजेत् ।
ब्राह्मणस्य तनुर्ज्ञेया सर्वदेवसमाश्रिता ॥
साचेत्सन्तापिता राजन् किं वक्ष्यामि तदेनसः ।
चक्राङ्किततनुर्वापि राजन् लिङ्गाङ्कितोऽपि वा ॥

नाधिकारीति विज्ञेयः श्रौतस्मार्तेषु कर्मसु ।

देवीभागवत एकादशस्कन्धे पञ्चदशेऽध्याये—

ऊर्ध्वपुण्ड्रं त्रिशूलं च वर्तुलं चतुरस्रकम् । ६ ।
अर्धचन्द्रादिकं लिङ्गं वेदनिष्ठो न धारयेत् ।
जन्मना लब्धजातिस्तु वेदपन्थानमाश्रितः । ७ ।
पुण्ड्रान्तरं भ्रमाद्वापि ललाटे नैव धारयेत् ।
ख्यातिकान्त्यादिसिद्ध्यर्थं चापि विष्णवागमादिषु । ८ ।
स्थितं पुण्ड्रान्तरं नैव धारयेद्वैदिको जनः ।
तिर्यक्त्रिपुण्ड्रं संत्यज्य श्रौतं कथमिति भ्रमात् । ९ ।
ललाटे भस्मना तिर्यक् त्रिपुण्ड्रस्य च धारणम् ।
विना पुण्ड्रान्तरं मोहाद्धारयन्नारकीभवेत् । ११० ।
वेदमार्गैकनिष्ठस्तु मोहेनाप्यङ्कितो यदि ।
पतत्येव न संदेहस्तथा पुण्ड्रान्तरादपि । १११ ।
नाङ्कनं विग्रहे कुर्याद्वेदमार्गे समाश्रितः ।
श्रौतधर्मैकनिष्ठानां लिङ्गं तु श्रौतमेव हि । १२ ।
अश्रौतधर्मनिष्ठानामश्रौतं लिङ्गमीरितम् ।
देवता वेदसिद्धा यास्तासां लिङ्गं तु वैदिकम् । १३ ।
अश्रौततन्त्रनिष्ठा यास्तासामश्रौतमेव हि ।
वेदसिद्धो महादेवः साक्षात्संसारमोचकः । १४ ।
भक्तानामुपकाराय श्रौतं लिङ्गं दधाति च ।
वेदसिद्धस्य विष्णोश्च श्रौतं लिङ्गं न चेतरत् । १५ ।
प्रादुर्भावविशेषाणामपि तस्य तदेव हि ।
श्रौतं लिङ्गं तु विज्ञेयं त्रिपुण्ड्रोद्धूलनादिकम् । १६ ।

अश्रौतमूर्ध्वपुण्ड्रादि नैव तिर्यक्त्रिपुण्ड्रकम् ।
वेदमार्गैकनिष्ठानां वेदोक्तेनैव वर्त्मना । १७ ।
ललाटे भस्मना तिर्यक्त्रिपुण्ड्रं धार्यमेव हि ।

इति । हेमाद्रौ प्रायश्चित्त काण्डे वायुपुराणे—

' ब्राह्मणो यदि मोहेन तापयेद्वह्निमुद्रया ।
न कर्मार्हो भवेदज्ञः स वै पाषण्डसञ्ज्ञकः '

इति । लिङ्गपुराणे-

' शङ्खचक्रे तापयित्वा यत्र देहे प्रदह्यते ।
स जीवन्कुणपस्त्याज्यः सर्वधर्मबहिष्कृतः ॥'

इति । आदित्यपुराणे-

वेदेषु यज्ञभागेषु यस्य नास्त्यधिकारिता ।
स तापयित्वा चक्रादीन्धारयेत्स्वभुजे द्वये ॥
ब्राह्मणो यदि मोहेन धारयेत्तप्तमुद्रिकाः ।
तस्य दर्शनमात्रेण कुर्यात्सूर्यावलोकनम ॥
पूर्वजाततनुं दग्ध्वा शङ्खचक्रादिभिः पृथक् ।
न तस्य निष्कृतिर्दृष्टा स्नानदानजपादिभिः ॥
तस्य निष्कृतिरुत्पन्ना पाराशर्येण भाषिता ।
केशान संवापयित्वा तु पुनः कर्म समाचरेत् ॥
गर्भगोलात्समुद्धृत्य गर्भाधानादिपूर्वकम् ।
षष्ठ्यावृत्त्यैव कृच्छ्राणां प्रायश्चित्तमुदीरितम ॥'

इति । कूर्मपुराणे—

' अज्ञात्वा मुखजेभ्यस्तु मुद्रादग्धेभ्य आदरात ।
सुवर्णमात्रासंग्राह्य प्राजापत्यं समाचरेत् ॥'

इति । मानवोपपुराणे चतुर्दशेऽध्याये—

' आयुधैः शङ्खचक्राद्यैर्न दहेच्च कदाचन '

इति । पराशरपुराणे सप्तमेऽध्याये—

' न दाहयेद्द्विजश्रेष्ठं न दहेच्चक्रपूर्वकैः ।
अङ्कितो यःस्वदेशात्तं राजा शीघ्रं विवासयेत् ॥
अत्यन्तपतितानां हि चक्रपद्माङ्कनं नृणाम् ।
विधीयते न शुद्धानामतः शुद्धं न वञ्चयेत् ॥
अध्यापने चाध्ययने श्रौतस्मार्तेषु कर्मसु ।
संभाषणे च सम्बन्धे नाधिकारी हि लाञ्छितः॥'

इति । पराशरमाधवीये—

' चक्राङ्किततनुर्यस्तु मृदा कार्ष्णायसेन वा ।
स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विज कर्मणः ॥'

इति । मत्स्यपुराणे—

' नाङ्कनं विग्रहे कुर्याच्चक्रशूलैर्मृदादिभिः ।
यदि कुर्याद्भयाल्लोभान्मोहाद्वा पि पतत्यधः ॥'

इति । ब्रह्मयामले—

' नाभेरूर्ध्वं सोमपाश्च नाभ्यधस्तादसोमपाः ।
देवास्तिष्ठन्ति विप्रेन्द्रे वेदवेदाङ्गपारगे ॥
निर्गच्छन्ति च शप्त्वैनं देवाः शीर्षादिवासिनः ।
पतितोऽयं भवत्येव शूद्रवच्चितिकाष्ठवत् ॥
व्याधिं विना कर्मयोग्यविप्राङ्गे चिह्नमीक्ष्य च ।
लोकेश्वरं भानुमीक्षेदथवा ह्रदमाविशेत् ॥'

इत्यादिप्रमाणवचननिचयैर्वैदिकब्राह्मणान्प्रति मुद्राधारणप्रतिषेधः, तद्विधयस्तुभ्रष्टादिविषया इति सिद्धम् ।

यत्तूच्यते तान्त्रिकैर्माध्वैः--मुद्राधारणे श्रुत्यादयः प्रमाणम् ।तथा हि, शतपथब्राह्मणे—

' यो ह वै सुश्लोकमौलेर्धर्माननुतिष्ठमानोऽग्निना चक्रं

धत्तेऽग्निसहस्रारो नेमिर्नेमिना तप्ततनूःसायुज्यं सलोकतामाप्नोति।'

'चक्रं बिभर्ति वपुषा भिन्नं बलं देवानाममृतस्य विष्णोः॥'

स एति नाकं तडिता विधूय विशन्ति यद्यतयो वीतरागाः॥'

ऋक्परिशिष्टे--

'अतप्ततनूर्न तदामो अश्नुते श्रृतास इद्वहन्तस्तत्समाशत।'

इति। यजुषु--

'प्रते विष्णो अब्जचक्रे सुतप्ते जन्माम्भोधिं तर्तवे चर्षणीन्द्राः।

मूले बाह्वोर्दधतेऽन्ये पुराणलिङ्गान्यङ्गे तप्तायुधान्यपर्यन्त॥'

इति। वायुपुराणे--

अग्निनैव तु सन्तप्तं चक्रमादाय वैष्णवः।

धारयेत्सर्ववर्णानां हरिसालोक्यसिद्धये॥'

इति। ब्रह्माण्डे--

'कृत्वा धातुमयीं मुद्रां तापयित्वा स्वकां तनुम्।

चक्रादिचिह्नितां भूप धारयेद्वैष्णवो नरः॥'

इति। नारदीयपाञ्चरात्रे--

'द्वादशारं तु षट्कोणं वलयत्रयसंयुतम्।

हरेः सुदर्शनं तप्तं धारयेत्तद्विचक्षणः॥'

इति। अधारणे निषेधश्च निन्दार्थवादेभ्यो गम्यः। तथा हि, नारदीये--

'श्रीकृष्णशस्त्राङ्कविहीनगात्रः

श्मशानतुल्यः पुरुषोऽथ नारी॥

दृष्ट्वा नरं तं नृपते सवासाः

स्नात्वा समर्चेद्धरिमङ्ग नित्यम्॥

इति। पाद्मे--

'तप्तचक्राङ्कितं दृष्ट्वा ये निन्दन्ति नराधमाः।

अवलोक्य मुखं तेषामादित्यमवलोकयेत्'

इति । यत्तु ब्रह्मगीतायां वचनम्—

'वज्रचक्रगदादीनि निजाङ्गेषु द्विजोत्तमाः ।
नित्यं संधारयिष्यन्ति पाखण्डोपहताः कलौ ॥'

इति वज्रसमभिव्याहृतचक्रादिविषयमिति मन्तव्यम् । एवमन्येष्वपि वचनेषु समूलेषू विषयव्यवस्था कल्प्या । अशक्यायां तु व्यवस्थायां समूलत्वे च दृढे, उदितानुदितहोमव द्वैष्णवाविष्णवभेदेन व्यवस्थितो विकल्प आश्रयणीयः । सर्वथा वैष्णवानामत्यावश्यकं तप्तचक्रादिधारणमिति ।

अत्रोच्यते—त्वया मुद्राधारणे प्रमाणत्वेनोपन्यस्तेषु वचनेषु नैकमपि वचनं वैदिकब्राह्मणान्प्रति तद्विधातुं शक्नोति, किन्तु वेदभ्रष्टान् कुण्डगोलकादीन्प्रत्येव । 'यो ह वै सुश्लोकमौलेः' इत्यादिवचनं त्वदीयग्रन्थ उपन्यस्तं तच्छतपथश्रुतिस्थमिति त्वदीयानां रामार्चनचन्द्रिकाकारादीनामभिमतम् परं तु न हि तत्प्रमाणसरणिमनुसरति, शतपथश्रुतावनुपलम्भात् । तेन वैदिकब्राह्मणान् प्रति मुद्राधारणसमर्थनं त्वाशामोदकचर्वणमात्रायितम् कूटसाक्षिणेव कूटकृता प्रतारकशिरोमणिना व्यस्तदेवप्रियेण तद्वाक्यं कल्पयित्वा किमित्यात्मा शिष्टजनगर्ह्यतां प्रापितः । अहो ते मन्दभाग्यता । किञ्च, तत्रापि विधिर्न श्रूयते, येन मुद्राधारणं प्रतिपादयितुं शक्येत । अपि चेदं पूर्वमुपन्यस्तस्मृतिवचनेभ्यः पतितादिविषयकमिति मन्तव्यम् । न च—स्मृत्या श्रुतेः संकोचोऽनुचितः इति-भ्रमितव्यम् ।

'सन्ध्यां पञ्चमहायज्ञान् नैत्यकं स्मृतिकर्म च ।
तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया ॥'

इति सूतके संध्यादिनित्यकर्मानुष्ठानहापनबोधकविशेषविषयिण्या जाबालस्मृत्या 'अहरहःसंध्यामुपासीत' इति सामान्यश्रुतेरिव प्रागुपन्यस्त विशेषविषयकस्मृतिवचनजातैस्त्वदीयश्रुतेः संकोचस्य युक्तत्वात् । एतेन त्वदुपन्यस्तं 'चक्रं बिभर्ति' इत्यादिवचनमपि व्याख्यातम् । यदपि जल्पितम्—'पवित्रं ते विततं ब्रह्मणस्पते' इति मन्त्रस्य ऋक्परिशिष्टत्वमिति—तत्तु परेषामवैदिकत्वमेवावेदयति । न तावदिदं परिशिष्टमपि तु, ऋक्संहितायां सप्तमाष्टके तृतीयेऽध्याये श्रूयत इत्यस्मत्तोऽवेहि ।

'पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत्समाशत ॥'

इत्ययं मन्त्रो माध्वैर्मुद्राधारणपरतया व्याख्यातः । तथा च माध्वव्याख्यानम्—
'ब्रह्मणः वेदस्य चतुर्मुखस्य ब्राह्मणजातेर्वा पते रक्षकेति विष्णुसंबोधनम् । प्रभुस्त्वं

विश्वतो विश्वेषां गात्राणि पर्येषि अन्तर्यामितया व्याप्नोषि तादृशस्य ते तत्पवित्रं सुदर्शनम् । अर्थात्तेनेति लभ्यते । अतप्तशरीर आमोऽदग्धपापस्तद्ब्रह्म नाश्नुते । शृतासः पक्वा वहन्त इत् दाहजन्यं किणं वहन्त एव तत्समाशत । 'पवित्रं चरणं वक्त्रं लोकद्वारं सुदर्शनम् । पर्यायवाचका ह्येते चक्रस्य परमात्मनः' इति वचनात् ।'

इति । तत्तुच्छम् । तथा हि—नायमर्थः प्रामाणिकः, पवित्रशब्दस्य सुदर्शने शक्तिग्रहाभावात् । प्रसिद्धव्याकरणकोशादिशक्तिग्राहकप्रमाणेषु वैदिकेषु लौकिकेषु वा त्वदुदाहृतस्य 'पवित्रं चरणम्' इत्यादिवचनस्यानुपलम्भात् । किञ्च, 'तस्मिन्नुदीचीनदशापवित्रं वितन्वति पवित्रं ते विततं ब्रह्मणस्पत इति वितन्यमानमभिमन्त्रयते यजमानः' इत्यापस्तम्बसूत्रेणोद्गातृभिर्द्रोणकलशे वितन्यमानस्य पवित्रस्यानुमन्त्रणेऽस्य मन्त्रस्य विनियुक्तत्वात् । तथा च—हे ब्रह्मणस्पते मन्त्रस्य स्वामिन् सोम ते तुभ्यं त्वत्पावनार्थमिदं दशापवित्रं विततमित्यर्थो भाष्यादिसम्प्रतिपन्नः । तथा च भाष्यम्—

'हे ब्रह्मणस्पते मन्त्रस्य स्वामिन्सोम ! ते पवित्रं शोधकं अङ्गं विततं सर्वत्र विसृतं स प्रभुः प्रभविता त्वं गात्राणि पर्येषि परिगच्छसि । विश्वतः सर्वतः तव तत्पवित्रं अतप्ततनूः पयोव्रतादिना असन्तप्तगात्रः आमः अपरिपक्वो नाश्नुते न व्याप्नोति । शृतास इत् शृता एव परिपक्वा एव निर्वहन्तः तत्पवित्रं समाशत इति व्याप्नुवन्ति ॥ १ ॥'

इति । तस्मान्नायं मन्त्रो मुद्राधारण प्रतिपादयतीत्यवगन्तव्यम् ।

अथ विनियोगप्रकरणादि प्रमाणनिरपेक्षेण केवलं यथाकथञ्चिदक्षरार्थमात्रेण सन्तुष्यसि चेत्तदा पाशुपतैरप्यस्य मन्त्रस्य लिङ्गधारणपरतया व्याख्यातत्वेन तदर्थस्यापि त्वया दुष्परिहरणीयत्वाद्विनिगमनाविरहेण लिङ्गधारणप्रसङ्गोऽपि ते गले पाशायेत । न च – नास्ति विनिगमनाविरहः उदितानुदितहोमवद्व्यवस्थित विकल्पस्याश्रयणादिति – वाच्यम् । प्रमाणप्रतिपन्नानन्यगतिकस्थलेष्वेव तस्य समाश्रयणीयतया त्वादृशैः स्वैरबुद्धिपरिकल्पितेष्वर्थेषु विभिन्नविषयेषु च तत्समाश्रयणीयत्वायोगात् । पाशुपतास्त्विवत्थं व्याचक्षते—

'ब्रह्मेति लिङ्गमाख्यातं ब्रह्मणस्पतिरीश्वरः । पवित्रं तद्धि विख्यातं तत्संपर्कात्तनुः शुचिः ॥ ऋगित्याह 'पवित्रं ते विततं ब्रह्मणस्पते' 'तस्मात्पवित्रं लिङ्गाख्यं धार्यं रुक्ममयं शुभम् । तेनातप्ततनूरज्ञः' इत्यादिना, 'दीक्षया सहितः साक्षादाप्नुयाल्लिङ्गमुत्तमम्' इत्यन्तेनागस्त्यं प्रति रेणुकेन पवित्रश्रुतेर्लिङ्गधारणपरतया व्याख्यानात् । तथा चायमर्थः—'हे ब्रह्मणस्पते लिङ्गस्याधिष्ठान ते तव पवित्रं लिङ्गं विततम्, प्रभुस्त्वम् विश्वेषां गात्राणि पर्येषि व्याप्नोषि । वैष्णवादिभिरपि लिङ्गस्य धृतत्वात् । पद्मपुराणे शिवराघव संवादे स्पष्टमेतत् । अतप्ता अक्लेशिता शिवदीक्षादिना तनूर्येन सः, आमोऽपक्वान्तःकरणो न लिङ्गं नाश्नुते दुरदृष्टवशात्तद्धारणे न प्रवर्तते इत्यर्थः । वहन्तो लिङ्गं,

धारयन्तः’

इत्यादि । अपि च ‘ सोमस्य धारापवते नृचक्षसः’ इत्युपक्रमात्, शोचन्तो अस्य तन्तवो व्यस्थिरन् ’ इत्युत्तरमन्त्रे श्रवणात्, ‘ पवमानसोमे दिवते ’ इत्यनुक्रमणिकावचनात्, प्रागुदाहृतापस्तम्बसूत्राच्च शैववैष्णवोक्तार्थद्वयमप्यप्रामाणिकम् । किञ्च, उपक्रमादिनिरपेक्षेण स्वेच्छानुसारेणार्थकल्पनायां तु तप्तमुद्रानिषेधपर एवास्यार्थो भवति । तथा च व्याचख्युस्तन्त्राधिकारनिर्णये श्रीभट्टोजीदिक्षितचरणा :—

‘ उच्छृङ्खलत्वे तु तप्तमुद्रानिषेधपरैवेयं श्रुतिरिति गृहाण । तथा हि–हे ब्रह्मणस्पते ब्राह्मणोत्तम, हे ब्राह्मण इत्येव तु नोक्तं, पतितान्प्रति निषेधो नास्तीति सूचयितुम् । त्वं प्रभुः समर्थोऽसि । अनेन प्ररोचनयापि नात्र प्रवर्तितव्यमिति सूचितम् । ‘दर्शयित्वा फलानि तु ’इति कौर्मचतुर्दशाध्यायस्थ वचनेनप्ररोचनयापि पाञ्चरात्रे प्रवर्तयतीत्युक्तम्। विश्वतो गात्राणि करचरणादिसर्वाङ्गाणि विस्तीर्णे पवित्रं यथा भवति तथा धारयसि, पावित्र्यं च‘यावतीर्वै देवता’(आरण्य२।१५)इत्यादि श्रुत्यन्तरसंवादी। ततश्च पाञ्चरात्रादौ त्वया न प्रवेष्टव्यमित्याशयेनाह–आय विष्णवे तप्ता तनूर्येन सः,आमोऽपक्रान्तः करणः,न केवलं तप्ताङ्गानभिष्टाभावमात्रं किन्त्वनिष्टमप्यस्तीत्याह–शृतासस्तप्तमुद्रां वहन्तः, तत् आधात्वर्थभूतं पाकमर्थात्कुम्भीपाकरूपमाशत प्राप्नुवन्तीति । तप्तमुद्रानिषेधकस्मृतिवचनजातं चात्रोपष्टम्भकम् । सन्तिचात्र मन्त्रवर्णाः । तद्यथा–‘ इमे येनार्वाङ् न तपश्चरन्ति ”

इत्यादि। यदपि ‘ यजुषु–‘प्रते विष्णो’ इत्यादिमन्त्रो मुद्राधारणपरत्वेन व्याख्यातः, तदपि व्याख्यानं ‘ गोघ्नात्तस्करत्वात्स्त्रीवधाच्च किल्बिषम् । पापकं च चरणेभ्यस्तत्पावमानीभिरहं पुनामि ’ इति ऋक्परिशिष्टव्याख्यानेन तैरेव श्रीदीक्षितपादैः परास्तम् तथा हि–

‘ चरणेभ्यः शङ्खचक्रगदादिभ्यः । ‘पवित्रं चरणं चक्रम्’ इति त्वदीयैरेवोक्तेः, बहुवचनादाद्यर्थावगतिः । अर्धचाः पुंसीत्यादिवत् । न च–चक्रादीनामपापजनकत्वं धारणपरत्वे तु लक्षणा स्यादिति–वाच्यम् । तद्धारणस्येव धार्यमाणानां तेषामप्यधर्मजनकत्वात् । फलसाधारण प्रयोजकत्वमात्रं पञ्चम्यर्थः इति भर्तृहरिप्रभृतिभिः सिद्धान्तितत्वाच्च । युक्तं चैतत् चरणपदस्य दुराचारपरत्वे लक्षणापत्तेः गोघ्नादिवैयर्थ्यापत्तेश्च । गोबलीवर्दन्यायाश्रयणेऽतिक्लिष्टता, ‘ ये नोगर्भ ’ इत्यादिना गतार्थता च तस्माद्गोहननादिनिषिद्धविशेषसाम्याच्चरणपदस्य त्वद्रीत्या चक्रपरतैवोचितेति । एतेन ‘ यजुषु ’ इत्यादि ‘अङ्कितोऽयं क्रियावान् ’ इत्यन्तं परास्तम् । ’

इति । यत्तूक्तम्–‘ वज्रसमभिव्याहृते ’ । ति तत्तुच्छम् पाञ्चरात्रतन्त्रावलम्बिनो वज्र-

धारणप्रसक्तेरेवाभावात् । इन्द्रतन्त्राधिकारिणामेव वज्रधारणस्यप्रसक्तिर्न तु शङ्खचक्रादि-धारणस्य । तथोक्तं पराशरोपपुराणे चतुर्थेऽध्याये–

'इन्द्रादिदेवताभक्तस्तन्त्रनिष्ठस्तथा स्थितः ।
ललाटे धारयेन्नित्यं वज्रपाशाङ्कुशादिकम् ॥'

इति । त्वदुपन्यस्ते ब्रह्माण्डपुराणवचने वायवीयवचने च वैष्णवशब्दोपादानात्, तन्त्रोक्तचक्रादिधारणं वैष्णवानामेव न तु वैदिकब्राह्मणानाम् । आगमोक्तविष्णुदीक्षावान् हि वैष्णवः, दीक्षा हि वेदभ्रष्टादिविषयेति व्यवस्थापितं प्रागेव ।

किञ्च, जीवब्रह्मैक्यप्रस्तावे त्वयोक्तस्य,—

'घातयन्ति हि राजानो राजाहमिति वादिनः ।'

इति श्लोकार्धस्याग्रे तदुत्तरार्धतयैतदर्धं पठ—

'तथैव तत्सदृक्षं हि चिह्नंबिभ्राणमेव च ॥'

इति । लोके हि राजचिह्नानि धारयतोऽपि राजानो घातयन्ति कारागारे वा निक्षिपन्ति । अतो विष्णुसाम्यतृष्णया विष्णुचिह्नभूतचक्रादि धारणं विपुलकदलीफललिप्सया जिह्वाच्छेदनमनुहरति । अहो ते दुराशा ।

तदेवं त्वदुपन्यस्तानां श्रुतिस्मृत्यादीनां समूलत्वे दृढे भ्रष्टब्राह्मणादि विषयत्वेन चारितार्थ्यमिति सन्तोष्टव्यमायुष्मता ।

तदेष सारः—

ब्रह्मादिशापनिर्दग्धा वेदभ्रष्टाश्च पापिनः ॥
सङ्कीर्णयोनिजाता ये कुण्डाद्या नटनर्तकाः ॥ १ ॥
नास्तिका ये तथा शूद्राः स्त्रियो वापि यथा तथा ।
पाञ्चरात्रादितन्त्रेषु विज्ञेयास्तेऽधिकारिणः ॥ २ ॥
त एवाधिक्रियन्तेऽत्र शङ्खचक्रादिधारणे ॥
इति श्रुत्यादिमानैस्तु सिद्धोऽर्थोऽत्र निरूपितः ॥ ३ ॥

इति सर्वं शिवम् ॥ ५ ॥

इदानीं माध्वान् वर्णयति—

माध्वत्वं प्राप्य नव्यं निजगुरुजनकान्निन्दया प्रोज्झ्य बन्धून्

प्रह्लादं दर्शयन्तो विगणितदितिजं सप्रमाणप्रलापाः ॥
जन्मैवान्यत्प्रपन्नाः प्रकटितकपटा वर्जिताचारपुण्ड्राः
पूर्वेषां पापरूपा निरवधि निरये रौरवे निष्पतन्ति ॥ ६ ॥

माध्वत्वमिति । प्रकटितकपटाः—प्रकटितः कपटो यैस्ते तथोक्ताः कापटिका इत्यर्थः, पूर्वेषांपूर्वजानां पितृपितामहप्रभृतीनामिति यावत्, वर्जिताचारपुण्ड्राः—वर्जिते आचारपुण्ड्रे यैस्ते तथोक्ता इति द्वन्द्वगर्भो बहुव्रीहिः । वर्जिताचारस्य धर्मभ्रष्टत्वं स्मर्यते पराशरेण—

'आचारभ्रष्टदेहस्य भवेद्धर्मः पराङ्मुखः ।'

इति । धर्मभ्रष्टानां च जातिभ्रष्टत्वं प्रतिष्ठापितपूर्वमित्युपरम्यते । यद्वा वर्जिताचार-पुण्ड्राः—वर्जितमाचारप्राप्तं पूर्वजाचारप्राप्तमिति यावत्, पुण्ड्रं यैस्ते तथोक्ताः । वैदिकब्राह्म-णानामाचारप्राप्तं पुण्ड्रं हि भस्मना तिर्यक् त्रिपुण्ड्रमेव, पुण्ड्रान्तरधारणं तु पातित्यप्रयो-जकम् । तथा चोक्तं सूतसंहितायां यज्ञवैभवखण्डे—

'वेदमार्गैकनिष्ठानां वेदोक्तेनैव वर्त्मना ।
ललाटे भस्मना तिर्यक्त्रिपुण्ड्रस्य तु धारणम् ॥
विना पुण्ड्रान्तरं मोहाद्धारयन्पतति द्विजः ।'

इति । ऊर्ध्वपुण्ड्रादिकं त्वश्रौतत्वेन विशिनष्टि वासिष्ठे लैङ्गे नवमेऽध्याये—

'अश्रौतमूर्ध्वपुण्ड्रादि ललाटे श्रद्धया सह ।
धारयिष्यन्ति मोहेन युगान्ते समुपस्थिते ॥'

इति । अत्र तुरीयपादेनोर्ध्वपुण्ड्रादेरर्वाचीनत्वमप्युक्तं भवति । एतेनातिरोहितमेत-दूर्ध्वपुण्ड्रादिकमवैदिकैरेवधार्यं न तु वैदिकैरिति । अत एव पापरूपाः, अन्यदेव जन्म-प्रपन्नाः, आचारान्तरेण जन्मान्तरं प्राप्ता इवेति भावः । सप्रमाणप्रलापाः—प्रमाणैः सदृशाः सप्रमाणाः, सप्रमाणाः प्रलापा येषां ते तथोक्ताः, विगणितदितिजम्– दितिजेषु विगणितम् प्रल्हादं दर्शयन्तः उदाहरणतयेत्यर्थः । नव्यम्, नूतनं प्रसिद्धश्रुतिस्मृतिपुराणेतिहासादिष्वनुक्त-मिति यावत् । माध्वत्वम् माध्वानुयायित्वम्, प्राप्य, निजगुरुजनकान्–निजाःगुरवः जनकाः पितृपितामहादयस्तान् बन्धूंश्च, निन्दया प्रोज्झ्य, रौरवे–तदाख्ये, निरये–नरके, 'निरयो दुर्गतिस्त्रियाम्' इति नरकपर्यायेऽमरसिंहः । निरवधि निष्पतन्ति–नितरां पतन्ति । न हि तेषां कदापि कथंश्चिदपि निरयादूर्ध्वगतिरिति भावः । जनकादिनिन्दकानां निरय-गतिर्हि श्रीशिवमहापुराणे उमासंहितायां षोडशेऽध्याये पठ्यते—

'देवद्विजपितृद्वेष्टा रत्नदूषयिता च यः ।
स याति कृमिभक्षं वै कृमीनात्ति दुरिष्टकृत् ॥'

इति ॥ ६ ॥

कलिपुरुषः पाखण्डशास्त्राणि विरचय्य लोकान् मोहयामासेत्याह द्वाभ्याम्—

कृत्वा पाखण्डशास्त्रं स्वमतिविरचितं षड्विधं शाक्तजैने
विष्णोर्द्वेधा तु शैवं पवनमतमिति प्रौढकामादिशिष्यान् ॥
आचार्योऽयं कलिर्ना धरणितलगतोऽध्यापयामास दुष्टो
येनास्मिञ्जीवलोके विलुलितमतयो हन्त ! मर्त्या भवन्ति ॥७॥

कृत्वेति । अयमाचार्यः—आचार्यम्मन्यः, कलिर्ना—पुरुषः, अत्र कलिनृपदयोः सामानाधिकरण्यात् कलिपदस्याभेदसंबन्धेन नर्यन्वयः, तथा च कल्यभिन्नः पुरुष इति बोधः, कलिपुरुष इत्यर्थः । धरणितलगतः सन्, स्वमतिविरचितम्—स्वस्य मत्या न तु श्रुतिस्मृत्याश्रयणेनेति भावः । विरचितम्—परिकल्पितम्, षड्विधम्-षट्प्रकारकम्, पाखण्डशास्त्रम्—पाखण्डाः पाति रक्षति अनुष्ठातृन् इति पाः—वेदप्रतिपाद्यो धर्मः, पारक्षणे, (१०५६ धा. पा.) अस्मात् 'अन्येभ्योऽपि दृश्यन्ते (पा. सू. ३।२।७५) इति क्विप्, तं खण्डयन्तीति पाखण्डाः, खडि भेदने ( १५८२ धा. पा. ) चुरादिः, 'कर्मण्यण्' ( पा. सू. ३।२।१ ) इत्यण् तथा चाहुः—

'पालनाच्च त्रयीधर्मः पाशब्देन निगद्यते ।
तं खण्डयन्ति ये तस्मात्पाखण्डास्तेन हेतुना ॥'

इति । पाषण्डशास्त्रमिति पाठे तु, पाषण्डाः—पापं सन्वन्ति ददति स्वसंसर्गिभ्य इति पाषण्डाः, 'षणु दाने' ( १४६५ ) तनादिरुभयपदी, यद्वा, पापं सनन्ति सेवन्ते इति पाषण्डाः, 'षण् संभक्तौ, ( ४६४ ) भ्वादि, परस्मैपदी, उभयत्रापि 'यमन्ताड्ः' (१११) इत्युणादिसूत्रेण उप्रत्ययो भवति, पृषोदरादेराकृतिगणत्वात्पाशब्दान्तस्य पस्य लोपः, ( ६।३।१०९ ) सनधातोः सस्य षत्वं च निपातनात्, तेषां शास्त्रम् । षड्विधं दर्शयति—शाक्तजैने द्वे, विष्णोर्द्वेधा वल्लभरामानुजमतभेदेनेत्यर्थः । शैवमेकम् । पवनमतम्—मध्वमतानुसारेण पवनावतारो मध्वस्तदीयमेकं मतम् । इत्येवं । षड्विधं मतं कृत्वा प्रौढकामादिशिष्यान्—काम आदिर्येषां ते तथोक्तास्ते हि—क्रोधलोभमोहमदमत्सराः, प्रौढाश्चते कामादयश्च ते च ते शिष्याश्च तान्, अध्यापयामास । येन मतेन, अस्मिन्,

जीवलोके मर्त्याः—मनुष्याः विलुलितमतयः—नष्टबुद्धयो विवेकशून्या इति यावत्, भवन्ति हन्त ! खेदे ॥ ७ ॥

ब्रह्मात्मैक्यानुवादे स्मृतिनिगमशिरःसंमते योऽन्यथार्थान्
ग्रन्थान्नव्यान् विधाय प्रसृमरतमसा कांश्चिदन्धीचकार ॥
विष्णोःसर्वोत्तमत्वं व्यतनुतकुमतिर्नीचतां च त्रिनेत्रे
व्यध्वोमध्वः प्रमत्तः कथमिह विहितो वेधसा दीर्घजिह्वः॥८॥

ब्रह्मेति । इहास्मिन्भूप्रदेशे, वेधसा—सृष्टिकर्त्रा, कुमतिः—कुत्सिता परमेश्वरविरुद्धा वेदविरुद्धा च मतिर्यस्य स तथोक्तः, अत एव प्रमत्तः—प्रकर्षेणमत्तः, उन्मत्त इत्यर्थः, अत एव च व्यध्वः—विगतोऽध्वा—पितृपितामहादिपरम्परया प्राप्तः प्राचीनो वैदिकधर्मलक्षणो मार्गो यस्मात्सस्तथोक्तः, व्यध्व इत्यत्र 'निरादयः क्रान्ताद्यर्थे पञ्चम्या'(वा. १३३९) इत्यनेन समासः । 'उपसर्गादध्वनः'(पा. सू. ४।४।८५) इति सूत्रेणाच्, 'नस्तद्धिते' (पा. सू. ।६।४।१४४) इत्यनेन टिलोपः । मध्वः—मध्वनामा कश्चन तौलवो नरः, दीर्घजिह्वः—दीर्घा जिह्वा यस्य स तथोक्तः, कथं विहितः-उत्पादितः ? । यःस्मृतिनिगमशिरःसंमते – स्मृतियः प्रसिद्धमनुयाज्ञवल्क्यापस्तम्बबौधायनादिप्रणीता धर्मसंहिता स्ताश्च निगमशिरांसि प्रसिद्धेशावास्याद्युपनिषदश्च तेषां संमते, ब्रह्मामैक्यानुवादे—ब्रह्मचात्मा जीवश्च तयोरैक्यानुवादे । अत्र जीवपरयोरैक्ये श्रुतिस्मृती भवतः—

'तत्त्वमसि (छा. ६।८।७) 'अहं ब्रह्मास्मि' (बृ. १।४।१०)
'एकमेवाद्वितीयम्' (छा. ६।२।१) इति ।
'नाहं जीवो न संसारी'
'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।' (गी. १३।२)
'विभेदजनके ज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥' (वि. पु. ६।७।९४)

इति ।

ननु—ब्रह्मात्मनोर्भेदस्यैव 'द्वासुपर्णा' (मु. ३।१।१) इत्यादिश्रुतिसंमतत्वात्कथं तयोरैक्यं स्मृतिनिगमशिरः संमतम् ?। न च—'तत्त्वमसि' इत्यादिश्रुत्या तयोरैक्यप्रतिपादनामिति—वाच्यम् । 'द्वासुपर्णा' इति जीवेशभेदप्रतिपादकश्रुत्या 'तत्त्वमसि' इत्यभेद-

प्रतिपादिकायाः श्रुतेर्गौणार्थत्वकल्पनादिति-चेत् । भ्रान्तोऽसि, लोकप्रसिद्धे निःश्रेयसाभ्युदयफलशून्ये रज्जुसर्पवत्प्रतीतिमात्रसिद्धे हि द्वैते श्रुतेस्तात्पर्यायोगात् । 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायात् ।

'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुद्ध्यते ।
एनं विन्दन्ति वेदेन तस्माद्वेदस्य वेदता ॥'

इति प्रत्यक्षाद्यगम्यार्थबोधकत्वलक्षणवेदलक्षणस्य जागरूकत्वात् । किञ्च,-

'ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद' (बृ. २।४।६, ४।५।७) 'अथ योऽन्यां देवता मुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्' (बृ. १।४।१०)

इत्यादिश्रुतिभ्यो भेददर्शनस्य निन्दितत्वात् ।

'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।' बृ. ४।४।१९, कठ ४।११) 'उदरमन्तरं कुरुते अथ तस्य भयं भवति' (तै. २।७) 'द्वितीयाद्वै भयं भवति' (बृ १।४।२)

इत्यादिश्रुतिभ्यो भेददर्शनस्यानर्थहेतुत्वश्रवणात् । 'इव' शब्देन च वस्तुतो दर्शनेऽविद्यादशायां प्रतिभासमानस्य नानात्वस्य निराकरणाच्च ।

'नात्र काचन भिदास्ति नैवात्र काचन भिदास्ति' (नृ उ. ता. ८) 'न ह्यस्ति द्वैतसिद्धिः' (नृ. उ. ता. ९)

इत्यादिश्रुतिभ्यो भेदस्य कण्ठत एव प्रतिषेधात् ।

परमात्मात्मनोरेकत्वज्ञानेन तयोर्भेद एव विभग्नः यत्पूर्णानन्दैकबोधस्तद्ब्रह्मैवाहमस्मि' (परमहंसोप०) 'तत्केन कं विजानीयात्' (बृ. ४।५।१५) 'न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात्' (बृ. ४।३।३०) 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' (बृ. २।४।१४।;४।५।१५) 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तै. २।६) 'स एष इह प्रविष्ट आनखाग्रेभ्यः' (बृ. १।४।७)

इति ब्रह्मात्मैकत्वबोधकश्रुतिशतेभ्यः,

'एकं समस्तं तदिहास्ति किञ्चित्तदच्युतो नास्ति परं ततोऽन्यत्।
सोऽहं स च त्वं स च सर्वमेतत्तदात्मरूपं त्यज भेदमोहम् ॥
(वि. पु. अं. २।१६।२३)

इति विष्णुपुराणद्वितियांशषोडशाध्यायगतवचनेन च ब्रह्मात्मनोरभेदस्यैव पारमार्थिकत्व-प्रतिपादनाच्च । किञ्च,–

प्रकाशते स्वयं भेदः कल्पितो मायया तयोः ॥ ४२ ॥
घटाकाशमहाकाशौ यथाकाशप्रभेदतः' (रुद्रहृदयोप.)
'घटाकाशमठाकाशौ महाकाशे प्रतिष्ठितौ ॥ ५० ॥
एवं मयि चिदाकाशे जीवेशौ परिकल्पितौ । (वराहोप.)
मायातत्कार्यविलये नेश्वरत्वं न जीवता ।' (वराहोप. ५२)
'यथाकाशो घटाकाशो मठाकाश इतीरितः ।
तथा भ्रान्तैर्द्विधा प्रोक्तो ह्यात्मा जीवेश्वरात्मना ॥'

'स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव तस्मादद्वय एवायमात्मा सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वयानन्दः परप्रत्यगैकरसः' ( नृ. उ. ता. खं. ९ )

इत्यादिश्रुतिभिर्जीवपरयोर्भेदस्य काल्पनिकत्वप्रतिपादनेनाभेदस्यैव पारमार्थिकत्व-बोधनात्, तदनुरोधेन 'द्वासुपर्णा' इत्यादि श्रुतिरौपाधिकभेदानुवादपरतयैव व्याख्येया । इतरथोदाहृतश्रुति विरोधापत्तेः ।

'तत्त्वमसि' 'अहंब्रह्मास्मि' 'स्वात्मबन्धहरः सर्वदा द्वैतरहितः आनन्दरूपः सर्वाधिष्ठानसन्मात्रो निरस्ताऽविद्या तमोमोहोऽहमेवेति संभाव्याहमोन्तत्सद्यत्परं ब्रह्म (रा. उ. ता., नृ. उ. ख. २) 'यत्पूर्णानन्दैक बोधस्तद्ब्रह्मैवाहमस्मि. ( प. हं. )

इत्याद्यनन्यार्थबोधकप्रथममध्यमोत्तमपुरुषप्रयोगघटितजीवपरैक्य बोधकश्रुत्यन्तरविरो-धापतेश्च । भेदस्यानुभवमात्रसिद्धत्वेनापूर्वत्वाभावात् तद्बोधकत्वेऽभ्युपगम्यमाने तस्या अप्रामाण्यापत्तेश्च । किञ्च, 'तुष्यतु दुर्जनः' इतिन्यायेन त्वन्मतमनुसृत्य तस्या जीवेश-परत्वमङ्गीकृत्यापि तद्भेदे प्रमाणाभाव हति प्रतिपादितम्, वस्तुतस्तु 'अनश्नन्नन्यो अभि-चाकशीति' इति मन्त्रेण प्रारब्धकर्मफलानुभवित्र्या बुद्धेः सकाशात्पुरुषं पृथक्कृत्य तस्य सुखदुःखात्मकसंसाराभावमेव प्रतिपादयति, पैङ्गिरहस्य ब्राह्मणेन हि सत्त्वक्षेत्रज्ञशब्दयो-

बुद्धिजीवपरतयैव व्याख्यातत्वात् । तथा हि—

'तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्, अनश्नन्नन्यो अभिचाकशीत्यनश्नन्नन्यो अभिपश्यतिज्ञस्तावेतौ सत्त्वक्षेत्रज्ञौ ॥' ( पै. र. ब्रा. )

इति । न च–अत्र सत्त्वक्षेत्रज्ञशब्दयोरपि जीवेशपरत्वमिति– भ्रमितव्यम् । तत्रैव पैङ्गिरहस्यब्राह्मणे–

'तदेतत्सत्त्वं येन स्वप्नं पश्यति, अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञस्तावेतौ सत्त्वक्षेत्रज्ञौ' ( पै. र. ब्रा. )

इत्युत्तरवाक्येन सत्त्वक्षेत्रज्ञशब्दयोर्बुद्धिजीवपरत्वेनैव सुस्पष्टं व्याख्यातत्वात् । न च– 'येन स्वप्नं पश्यति' इत्यत्र 'येन' इति तृतीयान्तपदेन स्वप्नदर्शनक्रियायाः कर्ताभिधीयते स जीव एव, क्षेत्रज्ञशब्दितस्त्वीश्वरः, सर्वज्ञत्वात्तस्य स्वप्नद्रष्टृत्वं संभवति, एवं चास्यापि पैङ्गिरहस्यब्राह्मणवाक्यस्य जीवेश्वरपरत्वमेवेति– शक्यशङ्क्यम् । 'पश्यति' इत्यत्राख्यातेन कर्त्रर्थस्याभिहितत्वेन तदर्थे 'येन' इति तृतीयाया असंभवात्करणार्थकताया एवाभ्युपगन्तव्यत्वात्, स्वप्नद्रष्टुः क्षेत्रज्ञस्य शारीरत्वेन विशेषितत्वात्, ईश्वरस्य व्यापकत्वेन शरीरान्तर्वर्तमानत्वेऽप्याकाशवच्छारीरत्वविशेषणासंभवाच्च ।

यदप्युक्तं रामानुजीयेन—'येन' इतीत्थम्भावे तृतीया, येन जीवेन विशिष्टः परमात्मा स्वप्नं पश्यति, स्वप्नद्रष्टृत्वं जीवद्वारा परमात्मविशेषणं भवतीति न विरोध इति । तदज्ञानविजृम्भितम् । परमात्मनो जीवद्वारा स्वप्नद्रष्टृत्वेऽभ्युपगम्यमाने तद्द्वारेणैव तस्य पापित्वदुःखित्वादीनामपि प्रसक्तेः । न च–एवं सत्यस्याः श्रुतेरचेतनाया बुद्धेर्भोक्तृत्वप्रतिपादनपरत्वेऽभ्युपगम्यमाने प्रत्यक्षविरुद्धार्थप्रतिपादकत्वेन 'यजमानप्रस्तरः' इत्यादिवाक्यवत्स्वार्थे प्रामाण्यं हीयेत इति–शङ्कनीयम् । इष्टापत्तेः। न हीयं श्रुतिर्जीवस्य भोक्तृत्वादि प्रतिपिपादयिषया प्रवृत्ता किन्तु तस्मिन् तदभावबोधनद्वारा तद्यथाभूतनिरुपचरितस्वरूपनिरूपणेदम्परतयैव प्रवृत्ता । तथा चाचेतनाया अपि बुद्धेश्चैतन्यतादात्म्याद्भोक्तृत्वप्रतिपादनेन, चैतन्ये भोक्तृत्वाद्यभावबोधनद्वारा जीवस्य निरुपचरितचिन्मात्रब्रह्मस्वरूपबोधनाय प्रवृत्तत्वादस्याः श्रुतेः प्रामाण्योपपत्तिः । तस्मान्नेयं श्रुतिर्जीवेशपरत्वेनाभ्युपगन्तुं युक्तेति सिद्धम् । अत्राधिकमस्मत्कृतश्रौतसिद्धान्तजाह्नव्यां द्रष्टव्यम् ।

अन्यथार्थान् वेदविरुद्धार्थान्,अप्रामाणिकार्थानिति यावत् । नव्यान् स्वबुद्धिपरिकल्पितान् सूत्रभाष्यादीन् तदाधारभूतांश्च–चतुरक, माठर, माठरव्य, कौण्डिन्य, माण्डव्य, मार्कण्डेय, मौद्गल्य, पौष्यायण, पोत्रायण सौत्रायण, सौकरायण, पाराशर्यायण, माध्यन्दिनायन, काषारव, कौषारव, बृहदुद्दालकौ, द्दालकायन, कुलिक, सौवर्णवत्स,गौपवन,भाल्वेया,भ्रिवेदस,

चतुर्वेदसंहिता, चतुर्वेदशिखे, न्द्रद्युम्न, वृणु, परम इत्याद्याभासश्रुतिवचनानि, तदनुसारान्, अध्यात्मनारायणसंहिता, बृहत्संहिता, महासंहिता, नारायणतन्त्र, ब्रह्मतन्त्र, पुरुषोत्तमतन्त्र मायावैभव, भविष्यत्पर्ववचन, ब्रह्मतर्कादीन् ग्रन्थान्, विधाय- विरचय्य, प्रसृमरतमसा—–प्रसृमरं प्रसरणशीलं तच्च तत्तमश्च तेन, कांश्चित्–वेदशास्त्रगन्धशून्यान् अनादिपापवासनावासितमनसः, अन्धीचकार—मोहयामास वैदिकमतात्प्रच्याव्य स्वमते प्रवर्तयामासेत्यर्थः । विष्णोः सर्वोत्तमत्त्वम्, त्रिनेत्रे–त्रीणि सूर्यचन्द्राग्नय एव नेत्राणि यस्य तस्मिन् श्रीपरमेश्वरे, नीचताम्–निकृष्टत्वं च व्यतनुत । हरिहरयोस्तरतमभाववादस्य पुरस्तान्निराकरिष्यमाणत्वान्नेह प्रतन्यते ॥ ८ ॥

इदानीं माध्वानां हरिहरतारतम्यवादमुपन्यस्य तन्निराकरोति–

ब्रह्मा विष्णोः सुतोऽस्मादजनि मृड इमं तारतम्यादिवादं
भाषन्ते प्राप्तदोषा निजमलिनधियो रुद्रतत्त्वानभिज्ञाः ॥
संवर्ते ब्रह्महर्योः पुरदहनकृतैः फालनेत्राग्निकीलै–
स्त्रैलोक्ये दह्यमाने कथमिव वितथास्तद्गिरो नो तदा स्युः ॥ ९ ॥

ब्रह्मेति । कीदृशा माध्वा इत्याशङ्कायामाह–निजेति । निजमलिनधियः–निजा मलिना रागद्वेषादिना कलुषिता, अनादिपापवासनावासिता वा धीर्येषां ते तथोक्ताः, अत एव प्राप्तदोषाः–प्राप्तो दोषो–जीवेशभेदहरिहरभेदहरिहरतारतम्यादिप्रलापप्रयुक्तो नरकप्रापको येषां ते तथोक्ताः, अत एव रुद्रतत्त्वानभिज्ञाः–रुजं भवरोगं तद्धेतुभूतमज्ञानं च द्रावयतीति रुद्रः श्रीपरमेश्वरस्तस्य तत्त्वं सतत्त्वं याथात्म्यमिति यावत्, अनभिज्ञाः–प्राक्तनानेकजन्मार्जितज्ञानप्रतिबन्धकीभूतबलवत्पापवासनावासितमतिमत्तया अजानन्तः। एतादृशा माध्वाः किं प्रलपन्तीत्यपेक्षायामाह–विष्णोरिति । विष्णोः सुतः ब्रह्मा तन्नामाऽजनि । अस्मात् –ब्रह्मणः मृडोऽजनि । इमं तारतम्यवादं पितृपुत्रत्वादिलक्षणोत्कृष्टनिकृष्टत्वरूपम्, आदिपदान्मृडजीवत्ववादं च भाषन्ते प्रलपन्तीत्यर्थः । पुरदहनकृतैः–पुरदहनः शिवस्तत्कृतैः, फालनेत्राग्निकीलैः–फाले ललाटे यन्नेत्रं तदेवाग्निस्तस्य कीलैर्ज्वालाभिः, त्रैलोक्ये दह्यमाने, ब्रह्महर्योः–ब्रह्मा च हरिर्विष्णुश्च तयोः संवर्ते–प्रलये सति 'संवर्तः प्रलयः' इति कोशात् ।तदा तद्गिरः-तेषां माध्वानां गिरः प्रलापा इति यावत्, । वितथाः–असत्याः कथमिव नो स्युः? अपि तु स्युरेवेत्यर्थः, ।

अत्रेदमवधेयम्–तान्त्रिकाणां माध्वानां हरिहरतारतम्यवादः केवलमप्रामाणिकत्वाच्छ्रेयोर्थिभिर्वैदिकैर्नादर्तव्यः । हरिहरयोर्भेदस्यैवाप्रामाणिकत्वेन तन्निबन्धनस्य तत्तारतम्य-

वाङ्स्यापि निर्मूलत्वात् । तथा हि–

'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ( ऋ. सं. २।३।२२ )' 'एष उ ह्येव सर्वे देवाः ।' 'स ब्रह्मा स शिवः हरिः सेन्द्रः सोऽक्षरः परमः स्वराट् ।' ( ना. १३।२ ) 'एको देवः सर्वभूतेषु गूढः' ( श्वे. ६।११ ) 'द्यावाभूमी जनयन् देव एकः' ( ऋ. सं. ८।३।१६ ) तत्र चतुष्पादं ब्रह्मविभाति जागरिते ब्रह्मा, स्वप्ने विष्णुः, सुषुप्तौ रुद्रः, तुरीयमक्षरम्' ( ब्रह्मोपनिषत् )

इत्यादीनि श्रुतिवचनानि,

'अहं त्वं सर्वगो देव त्वमेवाहं जनार्दन ।
आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते ॥
नामानि तव गोविन्द यानि लोके महान्ति च ।
तान्येव मम नामानि नात्र कार्या विचारणा ॥
त्वदुपासा जगन्नाथ सैवास्ति मम गोपते ।
यश्च त्वां द्वेष्टि देवेश स मां द्वेष्टि न संशयः ॥
त्वद्विस्तारो यतो ब्रह्मा अहं भूतपतिस्ततः ।
न तदस्ति विना देव यत्ते विरहितं हरे ॥
यदासीद्यच्च वर्तेत यच्च भावि जगत्पते ।
सर्वमेतद्धि देवेश विना किञ्चित्त्वया न हि ॥';

इत्यादीनि कैलासयात्राप्रसङ्गगतानि हरिवंशस्थवचनानि,

भवानहं च विश्वात्मन्नेक एव हि कारणम् ।
जगतोऽस्य जगत्यर्थे भेदेनावां व्यवस्थितौ ॥
त्वया यदभयं दत्तं दत्तं तदभयं मया ।
मत्तो न भिन्नमात्मानं द्रष्टुमर्हसि शङ्कर ॥
योऽहं स त्वं जगच्चेदं सदेवासुरमानुषम् ।
अविद्यामोहितात्मानः पुरुषा भिन्नदर्शनाः॥'

'सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् ।
स सञ्ज्ञां याति भगवानेक एव जनार्दनः॥'

इत्यादीनि विष्णुपुराणवचनानि,

'एक एव शिवः साक्षात्सृष्टिस्थित्यन्तसिद्धये ।
ब्रह्मविष्णुशिवाख्याभिः कल्पनाभिर्विजृम्भितः॥'

इत्यादीनि सूतसंहितावचनानि,

'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तै-
र्युक्तः परः पुरुष एक इहास्य धत्ते ।
स्थित्यादये हरिविरिञ्चिहरेतिसञ्ज्ञाः
श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः॥'

इत्यादीनि भागवतवचनानि चैक एव मायावच्छिन्नः परमेश्वरः स्वोपाधिवशादनेकरूपाण्यनेकसञ्ज्ञाश्चोररीकरोतीत्यावेदयन्ति ब्रह्मविष्णुरुद्रादीनां भेदं वारयन्ति । किञ्च,

'यो ब्रह्मविष्णुरुद्राणां भेदमुत्तमभावतः ।
साधयेदुदरव्याधियुक्तो भवति मानवः॥'

इति शातातपस्मृतिवचने,

'अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः
यातुधाना भविष्यन्ति पिशाचाश्च न संशयः॥

इति वायुपुराणवचने,

'क्वचिद्ब्रह्मा क्वचिद्विष्णुः क्वचिद्रुद्रः प्रशस्यते ।
नानेन तेषामाधिक्यं न्यूनत्वं वा कथंचन ॥
तत्तत्कल्पीयवृत्तान्तमधिकृत्यमहर्षिभिः ।
पुराणानि प्रणीतानि विद्वांस्तत्र न मुह्यति ॥'

इति कूर्मपुराणवचने,

'हरिरूपी महादेवो लिङ्गरूपी जनार्दनः ।
ईषदप्यन्तरं नास्ति भेदकृन्नरकं व्रजेत् ॥'

इत्यादिनारदीयवचने,

'विष्णोरन्यं तु पश्यन्ति ये मां ब्रह्माणमेव च ।
कुतर्कमतयो मूढाः पच्यन्ते नरकेष्वधः ॥
ये च मूढादुरात्मानो भिन्नं पश्यन्ति मां हरेः ।
ब्रह्माणं च तथान्येषां भ्रूणहत्यासमं त्वघम् ॥'

इति भविष्यत्पुराणादिवचनेषु च ब्रह्मविष्णुरुद्राणां तारतम्यवादे प्रत्यवायश्रवणात् । न च–एवं सति मृडस्य ब्रह्मजन्यत्वबोधकभागवतवचनं विरुद्धयेतेति–भ्रमितव्यम् । तादृग्वचनानां कल्पविशेषमधिकृत्याविर्भूतस्य पारमेश्वरलीलाविग्रहविशेषस्य प्रशंसातात्पर्यकत्वेन तदितरपारमेश्वरलीलाविग्रहाणामुत्पत्तिप्रतिपादने तत्प्रयुक्तजीवत्वजघन्यत्वादि प्रतिपादने च तात्पर्यकल्पनायोगात् । उक्तं च वायुपुराणे–

'ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् ।
कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः ॥
विष्णुश्च भगवांस्तद्वद्ब्रह्माणमसृजत्पुनः ।
नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः ॥
एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः ।
परस्परस्माज्जायन्ते परस्परजयैषिणः ॥
तत्तत्कल्पीयवृत्तान्तमधिकृत्यमहर्षिभिः ।
प्रभावः कथ्यते तेषां परस्परसमुद्भवात् ॥'

इति । उभयत्र तात्पर्यकल्पनायां वाक्यभेदापत्तेश्च । एतेन 'विष्णुः सर्वोत्तमोऽथ' इत्यादिमाध्वजल्पना गलहस्तिता ।

ननु–इदं तारतम्यवादप्रत्याख्यानमद्वैतस्तवकृदाशयविरुद्धम्, अद्वैतस्तवकृता तु तत्र तत्र शिवोत्कर्षप्रतिपादनद्वारा विष्णुनिकर्षाङ्गीकारेण तारतम्यवादस्यैवाङ्गीकृतत्वादिति–चेत् । भ्रान्तोऽसि, श्रीपरमेश्वरनिन्दासन्दब्धायास्त्वदीयाया वायुस्तुतेः खण्डनेदम्परतया प्रवृत्तत्वेन 'यथा यक्षस्तथा बलिः' इति न्यायेनैव स्तवकृता शिवोत्कर्षस्य दर्शितत्वात् । वैदिकानामद्वैतिनामस्माकमयं सिद्धान्तः–सत्यं ज्ञानमनन्तमेकमेवाद्वितीयं ब्रह्म मायावच्छिन्नं सत्परमेश्वरसञ्ज्ञितं स्वोपाधिवशाद्ब्रह्मविष्णुरुद्राद्यनेकलीलाविग्रहान्स्वीकरोति । न हि तत्रान्यतमस्योत्कर्षोऽन्यतमस्य निकृष्टत्वं चेति । वैदिकमतानुसारित्वादद्वैतस्तवकृतो हरिहराभेद एवाभिप्रेतः । अत एव वक्ष्यति–'भेदाभावप्रतीत्यै जगति हरिहरा-

वेकमूर्तित्वभाक्तौ लिङ्गाकारं गिरीशं शिरसि कलयते विठ्ठलः पाण्डुरङ्गः । ज्ञात्वा दृष्टोपपत्त्या व्यवहितमुभयोरित्थमैकात्म्यमन्धा विष्णौ श्रद्धां पुरारौ दधति कुमतयो दुर्धियो द्रोहबुद्धिम्।' इति ।

न च—एव मपि ' लिङ्गाकारं गिरीशं शिरसि कलयते विठ्ठलः पाण्डुरङ्गः' इत्यत्रापि शिवोत्कर्षप्रतिपादनद्वारा विष्णुनिकर्षप्रतिपादनेन तारतम्यवाद एवास्याभिप्रेत इति—भ्रमितव्यम् । तदुक्तेस्तत्रत्यवस्तुगत्यनुवादात्मकत्वात् । किञ्चात्रापि ' भेदाभावप्रतीत्यै ' ' अव्यवहितमुभयोरित्थमैकात्म्यम् ' इत्युपक्रमोपसंहराभ्यां ' अन्धा विष्णौ श्रद्धां पुरारौ दधति कुमतयो दुर्धियोद्रोहबुद्धिम् ' इति भेदवादिनिन्दार्थवादगम्येन भेदप्रतिषेधेन तदुक्तेर्हरिहरयोरभेदे एव तात्पर्यविगमात् । ' त्वय्यास्तां भक्तिरेका शिवमुरभिदि वा नोभयोस्तारतम्यम् ' इत्यत्र तु हरिहरयोरभेदस्य स्तवकृता कण्ठरवेणोक्तत्वादिति सन्तोष्टव्यमायुष्मता ॥ ९ ॥

इदानीं परेषां शिवमाहात्म्यप्रतिपादकवचसां तामसत्वजल्पनां शिवजीवत्वप्रलापांश्च निराचष्टे—

स्मृत्यादौ भारते वा मृडमहिमगिरां तामसत्वं दिशन्तः
पौरोभाग्यैकनिष्ठाः परमहसि शिवे जीववादादरा ये ॥
तेषामुन्माद एवं किमु सहजगुणः किं पुरोभाविनोऽधः—
पातस्येदं निदानं किमु दुरिततते॰ प्राक्कृताया विपाकः॥१०॥

स्मृत्यादाविति । ये पौरोभाग्यैकनिष्ठाः—दोषैकदृग्जना माध्वाः, स्मृत्यादावित्यत्रादिशब्दः उपस्मृति पुराणोपपुराणानां सङ्ग्राहकः । तथा च मन्वादिप्रणीतस्मृतिषु विश्वामित्राद्युपस्मृतिषु श्रीशिवादिमहापुराणेषु सौराद्युपपुराणेषु चेत्यर्थः । भारते तदाख्य इतिहासग्रन्थेऽपि, वाकारोऽप्यर्थकः, मृडमहिमगिराम्-मृडस्य श्रीपरमेश्वरस्य महिमा महात्म्यमुत्कृष्टत्वं तत्प्रतिपादकानां गिरां—

' कानि चिद्वेदवाक्यानि ब्राह्मणा वेदपारगाः ।
रुद्रमूर्तिं समाश्रित्य शिवे परमकारणे ॥
पर्यवस्यन्ति विप्रेन्द्रास्तथा वाक्यानि कानि चित् ।
विष्णुमूर्तिं समाश्रित्य ब्रह्ममूर्तिं च कानि चित् ॥
आग्नेयीं मूर्तिमाश्रित्य श्रुतिवाक्यानि कानि चित् ।
सूर्यमूर्तिं मुनिश्रेष्ठास्तथैवान्यानि कानि चित् ॥

पुराणैर्दशभिर्विप्राः प्रोक्तो रुद्रस्तथैव च ।
चतुर्भिर्भगवान् विष्णुर्द्वाभ्यां ब्रह्मा प्रकीर्तितः ॥
अग्निरेकेन विप्रेन्द्रास्तथैकेन दिवाकरः ।
एवं मूर्त्यभिधानेन द्वारेणैव मुनीश्वराः ॥
प्रतिपाद्यो महादेवः स्थितः सर्वासु मूर्तिषु ।
स एव मोचकः साक्षाच्छिवः सत्यादिलक्षणः ॥

इत्यादिशिवोत्कर्षप्रतिपादकस्कन्दपुराणानाम् तामसत्वं दिशन्तः, तथा हि तद्ग्रन्थे—

वैष्णवं नारदीयं तु तथा भागवतं शुभम् ।
गारुडं च तथा पाद्मं वारहं शुभदर्शने ॥
यदेतानि पुराणानि सात्विकानि मतानि वै ।
ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च ॥
भविष्यद्वामनं ब्राह्मं राजसानि निबोध मे ।
मात्स्यं कौर्म्यं तथा लैङ्गं शैवं स्कान्दं तथैव च ॥
आग्नेयं च षडेतानि तामसानि मतानि मे ।'

इत्यादिवचनानि परिकल्प्य 'तामसा नरकाय वै' इति च प्रलप्य मत्स्यपुराणादेरप्रामाण्यमेवेति जल्पन्ति । तत्तु तेषां प्राक्तनपापवासनाप्रयुक्तश्रीशिवप्रद्वेषान्धितदुर्बुद्धिविलसितम् । पुराणानां क्वचिदंशे प्रामाण्यं क्वचिदंशेऽप्रामाण्यमिति कल्प्यमानेऽर्धजरतीयन्यायापत्त्या लाघवात्तत्कल्पितविभागवचनानामेवाप्रामाण्यस्य युक्तत्वात् । अन्यथा 'इदं पुराणं मुक्त्वैकं नास्त्यन्यत्साधनं परम्' इत्यादि कौर्मपुराणाद्युक्त तत्तत्पुराणमहत्वप्रतिपादकानां वचनानां महीयस्येव वैयाकुली प्रसज्येत, प्रसज्येत च पुराणप्रणेतुः श्रीकमलासनस्य ब्रह्मणो वेदविभागकृतो भगवतो नारायणावतारस्य श्रीव्यासाचार्यस्य वा प्रतारकत्वम् । किञ्च, सात्विकत्वेन तदभिमते गारुडे, पाद्मे श्रीशिवराघवसंवादाद्यनेकस्थलेषु च तामसत्वेन तदभिमतलिङ्गपुराणादिभ्योऽप्यतिमात्रं भस्मरुद्राक्षादिमाहात्म्य-

वर्णनं श्रीशिवपारम्यप्रतिपादनं श्रीशिवनामसङ्कीर्तनादिकं केवलाद्वैतप्रतिपादनं च वरीवर्ति। आम्नातं चैतदपि श्वेताश्वतराथर्वशिरः कालाग्निरुद्रजाबालमाण्डूक्याद्युपनिषत्सु। एवं च श्वेताश्वतराथर्वशिर आदिश्रुतिभिः सात्विकत्वाभिमतपाद्मादिभिश्च मात्स्यादीनामर्थतौल्ये भद्रमुख! त्वदीयः प्रामाण्याप्रामाण्यविभागः कथमुपपद्यते ?। किं च, स्कान्दादिपुराणानां तामसत्वं प्रलप्य तद्वचनान्येव त्वदीयभाष्ये तत्रतत्र प्रमाणत्वेनोपन्यस्य 'वदतो नास्ति मे जिव्हा' इति प्रलपतां व्याघातदोषदूषितानां कोटिष्वात्मानं पातयन्कथं न लज्जसे ?। तथा हि—त्वदीयजिज्ञासासूत्रभाष्ये—'नारायणाद्विनिष्पन्नम्' इत्यादि। जन्मादिसूत्रभाष्ये—'उत्पत्तिस्थितिसंहाराः' इत्यादि। किंच, सात्विकत्वाभिमते पद्मपुराणे शिवराघवसंवादे कूर्मपुराणस्योत्कर्षप्रतिपादनं दरीदृश्यते—

'द्विजेन वाच्यमानं तु पुराणं श्रुतवानिदम्।
हृदये हृद्यमेकं तु द्विजेरितमतिष्ठत॥
परात्परतरं याति नारायणपरायणः।
न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम्॥'
'कूर्मोक्तं यत्पुराणं तद्देवयोरभिधावहम्।
श्रृणोति यस्तत्प्रथमं तस्य पापं विनश्यति॥'

इति। तदेवं सर्वेषां पुराणानामविगीताचारवद्भिः शिष्टैः परिगृहीतत्वात्प्रामाण्यं निरपवादं सिद्ध्यति। अत्राधिकं जिज्ञासुभिः श्रीमन्नीलकण्ठदीक्षितकृते शिवपुराणतामसत्वखण्डने श्रीमद्भट्टोजीदीक्षितकृते तत्त्वकौस्तुभादौ च विलोकनीयमित्युदास्यते विस्तरभिया।

परमहसि—परमप्रकाशरूपे चिद्रूपे ब्रह्मणीति यावत्, शिवे, जीववादादराः—जीववादे जीवत्ववादे आदरो येषां ते तथोक्ताः, भावप्रधानो निर्देशः। अवैदिकानां पापिनां माध्वानां शिवजीवत्ववादः श्रेयोऽर्थिभिर्वैदिकैश्च सर्वथा हेय एव।

ते हि एवं प्रत्यवतिष्ठन्ते,—ननु—'नारायणाद्रुद्रो जायते' (नारायणोप.) इति श्रुतेः शिवस्य नारायणजन्यत्वश्रवणाज्जीवभावोऽवश्यमभ्युपेतव्यः—इति। तत्प्राक्तनानेकजन्मार्जित पापवासनाविलसितम्। तस्याः श्रुतेस्तम्भान्नृहरेरिव नारायणाद्रुद्रस्याविर्भाव इत्यर्थपरतयैवोपपन्नत्वेनोत्पत्ति प्रतिपादनपरत्वकल्पनायोगात्। तथा हि—

'ब्रह्मा विष्णुश्च रुद्रश्च विभक्ता अपि पण्डिताः।
परमात्मविभागस्था न जीवव्यूहसंस्थिताः॥

पुण्यपापावृता जीवा रागद्वेषमलावृताः ।
जन्मनाशाभिभूताश्च सदा संसारिणोऽवशाः ॥
ब्रह्मविष्णुमहेशानां तथा तेषां द्विजर्षभाः ।
आविर्भावविशेषाणां पुण्यपापादयो न हि ॥
आज्ञया परतत्त्वस्य जीवानां हितकाम्यया ।
आविर्भावतिरोभावौ तेषां केवलमास्तिकाः ॥
हरिर्ब्रह्मा हरस्तेषामाविर्भावश्च सुव्रताः ।
सदा संसारिभिर्जीवैरुपास्या भुक्तिमुक्तये ॥

इति श्रीमत्सूतसंहितावचनेषु ब्रह्मविष्णुरुद्राणां ब्रह्मकोटित्वंमुमुक्षूपास्यत्वमाविर्भावादिकं च सुस्पष्टमभिहितमतो न शिवस्य जीवत्वानुपास्यत्वादिशङ्कापङ्कलङ्कावकाशलेशोऽपि । अन्यथा प्रच्छन्नलोकायतिकेन त्वया स्वीयं नास्तिक्यमेव विशदीकृतंस्यात् । तथा हि–

'यतो ब्रह्मविष्णुरुद्रेन्द्राः संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैः स कारणं कारणानां धाता ध्याता कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शम्भुराकाशमध्ये' ( अथर्वशिखो. )

इत्यादिश्रुतौ प्राणिगर्भविमोचनार्थवृत्तेः सूयतेः प्रयोगात् नारायणस्यापि शिवजन्यत्वश्रवणाज्जीवभावापत्तिर्वज्रलेपायते । जन्यस्य हि सादित्वमियमेन तस्य चानित्यत्वव्याप्तत्वेन तादृशनियमस्य त्वयाप्यभ्युपगतत्वेन च विष्णोरपि नाशप्रसङ्गेन त्वदीयं प्रच्छन्ननिरीश्वरवादित्वलक्षणं नास्तिक्यं स्फुटीभवति । ततश्च निरीश्वरवादिनस्तव सूत्रभाष्यादिप्रस्थानमपि काकदन्तपरीक्षायत इत्यहोदर्शितमसुरेण पापपरीतात्मनान्यस्यापशकुनार्थं स्वनासिकां छित्वा दुष्टत्वं स्पष्टीकुर्वतः प्रच्छन्नदुष्टस्य चरितमनुहरता प्रच्छन्नलोकायतिकेन त्वया स्वस्य चार्वाकज्येष्ठभ्रातृत्वम् ।

एवं, तेषाम्–पूर्वोक्तानां, मृडमाहात्म्यप्रतिपादकवचसां तामसत्वशिवजीवत्ववादिनां माध्वानामित्यर्थः । अयम्–उक्तप्रलापः, उन्मादः- चित्तविभ्रमो मौढ्यं वा ? किमु सहजगुणः–नैसर्गिकोधर्मः ? किं पुरोभाविनोऽधः पातस्य नरकप्राप्तेः, निदानम्–आदिकारणम् ?

श्रीशिवनिन्दया नरकप्राप्तिः सौरपुराणे दर्शिता–

' दधीचिरुवाच–

एते च ब्राह्मणाः सर्वे ये द्विषन्तो महेश्वरम् ।
भवन्तु वेदबाह्यास्ते तमोपहतचेतसः ॥
पाखण्डाचारनिरताः सर्वे निरयगामिनः ।'

एवमन्यत्रापि परःसहस्राणि वचनानि सन्ति, विस्तरभिया तान्यत्र नोपन्यस्तानीत्यवगन्तव्यम् । किमु प्राकृतायाः—पूर्वस्मिन् जन्मनि कृतायाः, दुरिततते:-पापपरम्परायाः विपाकः—परिणामः ?

कर्मविपाकविवेके—

'महापापैर्यातनां ये नारकीमनुभूय च ।
क्रमान्मनुष्यतां प्राप्य विनिन्दन्ति शिवं श्रुतिम् ॥'

इति दुरिततति विपाकत्वेन शिवनिन्दा दर्शिता; अतः सुष्ठूक्तं 'दुरिततते: प्राकृताया विपाकः' इति ॥ १० ॥

श्रीशिवनिन्दां कुर्वतां फलविशेषं दर्शयति—

श्रीकण्ठोत्कण्ठरीढादृढदुरितघटाघट्टनोद्गाढमूढा
वैकुण्ठे कुण्ठिताशाः प्रकटमुभयतो भ्रष्टतामूढतन्त्राः ॥
तीक्ष्णायः कण्टकानां विकटसटसटास्फोटनैस्तर्जनानां
ताड्यन्ते बद्धतुण्डाः कठिनयमभटैर्भेदभाद्दुर्दुरूहाः ॥ ११ ॥

श्रीकण्ठेति । कठिनयमभटैः—कठिनाश्चते यमभटाश्च तैः, तर्जनानाम्—भयावहानाम्, तीक्ष्णायः कण्टकानाम्—तीक्ष्णानि च तानि अयः कण्टकानि लोहकण्टकानि तेषाम्, 'तप्तायः कण्टकानाम्' इति पाठान्तरम् । विकटसटास्फोटनैः—विकटाःभयानका ये सटसटाः सटसटेत्यनुकरणशब्दास्तत्सहितैरास्फोटनैः प्रहारैः, श्रीकण्ठोत्कण्ठरीढादृढदुरितघटाघट्टनोद्गाढमूढाः—श्रीकण्ठे या उत्कण्ठा तस्या या रीढा अवज्ञा 'रीढावमाननावज्ञा' इत्यमरसिंहोक्तेः, तया दृढदुरितस्य घटा इव घटास्तेषामाघट्टनेन सङ्घट्टनेन उद्गाढमूढा अत्यन्तमूढाः, अत एव वैकुण्ठे कुण्ठिताशाः—कुण्ठिता आशा येषां ते तथोक्ताः,

ननु—शिवविद्वेषिणां विष्णुविद्वेषाभावेन प्रत्युत विष्णुभक्तिप्रवणतया शिवविद्वेषमात्रेण कथं वैकुण्ठे कुण्ठिताशत्वम ? इति—चेत् । भ्रान्तोऽसि । 'यश्च त्वां द्विषते लोकः स मां

द्वेष्टि न संशयः' इति हरिवंशस्थकैलासयात्राप्रसङ्गगतवचने विष्णुविद्वेषाच्छिवविद्वेषत्वोक्त्या समानन्यायेन शिवविद्वेषाद्विष्णावपि द्वेषसंभवात् । अत एव च प्रकटं यथा स्यात्तथा उभयतः—शिवविष्णुभ्याम्, भ्रष्टतामूढतन्त्राः—भ्रष्टतया मूढं तन्त्रं व्यवहारः शास्त्रं वा येषां ते तथोक्ताः, भेदभाग्दुर्दुरूढाः- भेदं भजन्ति ते भेदभाजस्ते च ते दुर्दुरूढाः अत्युन्मत्तवादिनश्च, वक्रतुण्डाः—वक्राणि तुण्डानि मुखानि येषां ते तथोक्ताः सन्तः, ताड्यन्ते ॥११॥

श्रीशिवमाराधयतामिष्टप्राप्तिं निर्दिशति—

आराध्य स्थाणुमाद्यं सुरगणवरदं भीष्मकस्यात्मजायां
पुत्रान्प्रद्युम्नमुख्यानजनयदधिकं भक्तियुक्तो मुकुन्दः ॥
पार्थो नाप्यस्त्रलब्ध्यै कुशशयनगतः स्वप्नदृष्टाच्छरण्यो
लब्ध्वा कामान्पुरारेः समिति रिपुगणान्दुर्जयान्निर्जिगाय॥१२॥

आराध्येति । अधिकं यथा स्यात्तथा, भक्तियुक्तः—भक्त्याऽनुरागेण युक्तः, मुकुन्दः कृष्णः, कैलासं गत्वेति शेषः । सुरगणवरदम्—सुराणां देवानां गणाः समूहास्तेषां वरदो वरान् ददतीति तम्, आद्यम्—कारणरहितम्, स्थाणुम्,—प्रलयेऽपि तिष्ठतीति स्थाणुः, यद्वा त्रिपुरविजयसमये सज्जीकृतधनुष्कस्त्रिपुराणां क्रमयोगकालं निरीक्ष्य स्थिरतया चिरकालं स्थितत्वात्स्थाणुस्तम्, तथा चोक्तं महाभारते द्रोणपर्वणि—

'अतिष्ठत्स्थाणुभूतः सन्सहस्रपरिवत्सरान् ।
यदा त्रीणि समेतानि अन्तरिक्षे पुराणि वै ॥
त्रिपर्वाणि त्रिशल्येन तदा तानि बिभेद सः ।'

इति । शिवम्, आराध्य, भीष्मकस्यात्मजायाम्—रुक्मिण्याम्, प्रद्युम्नमुख्यान्—प्रद्युम्नो मुख्यो येषां ते तथोक्तान्, पुत्रानजनयत् । तथा च महाभारते हरिवंशे भविष्यपर्वणि कैलासयात्रायाम्—

'अथोवाच तदा देवी रुक्मिणीरुक्मभूषणा ।
पुत्रमिच्छामि देवेश त्वत्तो माधवनन्दनम् ॥

इत्यादिना श्रीकृष्णं प्रति रुक्मिणीकृतां पुत्रविषयिणीं प्रार्थनां सन्दर्श्य—

'इत्युक्तो देवदेवेशः प्रियया प्रियमाणया ।
तया महिष्या रुक्मिण्या रुक्मिशत्रुर्यदूद्वहः ॥

प्रोवाच वचनं काले रुक्मिणीं यादवेश्वरः ।
दातास्मि तादृशं पुत्रं यं त्वमिच्छसि भामिनि ॥'

इत्यादिना रुक्मिण्यै पुत्रप्रदानं प्रतिश्रुत्य तदर्थं तपश्चर्तुं भगवतः श्रीकृष्णस्य कैलासगमनसङ्कल्पं वर्णयति–

' एष गच्छामि पुत्रार्थं कैलासं पर्वतोत्तमम् ॥
तत्रोपास्य महादेवं शङ्करं नीललोहितम् ।
ततो लब्धास्मि पुत्रं ते भवाद्भूतहितेरतात् ॥
तपसा ब्रह्मचर्येण भवं शङ्करमव्ययम् ।
तोषयित्वा विरूपाक्षमादिदेवमजं विभुम् ॥
गमिष्याम्यहमद्यैव द्रष्टुं शङ्करमव्ययम् ।
स च मे दास्यते पुत्रं तोषितस्तपसा मया ॥
तत्र गत्वा महादेवं नमस्कृत्य सहोमया ।'

इति ।

' तमारुह्य महाशैलं देवकीनन्दनो हरिः ।
मानसस्योत्तरं तीरं जगाम यदुनन्दनः ॥
तपश्चर्तुं किल हरिर्विष्णुः सर्वेश्वरं शिवम् ।
जटी चीरी जगन्नाथो मानुषं वपुरास्थितः ॥
तपसे धृतचित्तस्तु शुचौ भूमावुपाविशत् ।
अवरुह्य ततो यानाद्गरुडाद्वेगसंमितात् ॥
द्वादशाब्दं तपश्चर्तुं मनो दध्रे ततो हरिः ।
फाल्गुनेन तु मासेन समारेभे जगत्पतिः ॥
शाकभक्षः कृतजपो वेदाध्ययनतत्परः ।'

इत्यादिना कृष्णकृतं पुत्रप्राप्तिफलकं तपः प्रस्तुत्य,

'पुत्रार्थं यदि ते देव तपश्चर्या जनार्दन ॥
पुत्रो दत्तो मया कृष्ण पूर्वमेव जगत्पते ।
शृणु तत्रापि भगवन् ! भगवान्करुणात्मकः ॥
तपश्चर्तुं प्रवृत्तोऽहं कुतश्चित्कारणाद्धरे ।
वर्षायुतं महाघोरं पुरा कृतयुगे तदा ॥
भवानी तत्र मे देव परिचर्तुं तदाभवत् ।
पित्रा नियुक्तादेवेश उमैषा वरवर्णिनी ॥
भीत इन्द्रस्तदा देव मारं मां प्रेषयत्तदा ।
मधुना सह संयुक्तो मारो मामग्रतस्तदा ॥
लक्ष्यं मामकरोत्तत्र बाणस्य प्रेषितस्य ह ।
एषा मां सेवते तत्र दानात्पुष्पादिना हरे ॥
अचिन्तयं तदा विष्णो शक्रस्यैतच्चिकीर्षितम् ।
ततः प्रभूता देवेश दया तं प्रति वर्तते ।
ब्रह्मणा च नियुक्तोऽस्मि प्रीतस्तत्र जनार्दन ॥
नियुक्तः पुत्ररूपेण स ते देव जगत्पते ।
ज्येष्ठस्तव सुतो देव प्रद्युम्नेत्यभिविश्रुतः ॥
स्मरं तं विद्धि देवेश नात्र कार्या विचारणा ।

इत्यादिना कृष्णाय शिवेन दत्तं पुत्ररूपं वरप्रदानं दर्शितम् ।

शरण्यः शरणं रक्षणम् 'शरण रक्षणे गृहे' इति यादवः । शरणे साधुः शरण्यः 'तत्र साधुः' (पा.सू.४।४।९८) इति यत्प्रत्ययः । कुशशयनगतः–दर्भशयनस्थः, ना–नरो–नरावतारोऽपीति यावत्, पार्थः–पृथाया अपत्यं पुमान्, अर्जुनः, अस्त्रलब्ध्यै–पाशुपतास्त्रप्राप्तये, पुरारिमुपास्येति शेषः, । तस्मात्स्वप्नदृष्टात्, स्वप्ने दृष्टः साक्षात्कृतस्तस्मात् पुरारेः–पुराणां शरीराणां स्थूलसूक्ष्मकारणरूपाणामरिः शत्रुस्तस्मात्, यद्वा पुराणां काञ्चनराजतलोहमयनां तारकाक्ष्यकमलाक्ष्यविद्युन्माल्याख्यदैत्याद्यधिष्ठितानामरिः शत्रुस्तस्मात् त्रिपुरारे-

रित्यर्थः, अस्य त्रिपुरविनाशकत्वं तैत्तिरीयश्रुतावुपसदर्थवादे श्रूयते–'तेषामसुराणां तिस्रः पुर आसन्'इति। इयं कथा लिङ्गपुराणे प्रपञ्चिता तत्र द्रष्टव्या। तामेव कथामेकत्रिंशत् श्लोकव्याख्यायां श्रीशिवमहापुराणादुद्धरिष्यामः। तत्रापि द्रष्टव्या। कामान्–पाशुपताद्यस्त्रलाभलक्षणान्, लब्ध्वा, समिति–युद्धे, दुर्जयान्–जेतुमशक्यान्, रिपुगणान्, निर्जिगाय–अजयत्। तथा च महाभारते द्रोणपर्वणि–

'तं तु शोकेन सन्तप्तं स्वप्ने कपिवरध्वजम्।'

इत्यादिना शोकसन्तप्तस्यार्जुनस्य कृष्णदर्शनं वर्णयित्वा तच्छोककारणं श्रुत्वा तस्मै श्रीशिवात्पाशुपतास्त्रप्राप्तिरूपं शोकापनोदनोपायं श्रीकृष्णोपदिष्टं समुपवर्ण्य श्रीकृष्णेन सह कैलासं गतस्यार्जुनस्य.

'समासाद्य तु तं शैलं शैलाग्रे समवस्थितम्।'

इत्यादिना शिवसाक्षात्कारं कथयित्वा,

'वासुदेवार्जुनौ शर्वं तुष्टावाते महामती।'

इत्यादिना नरनारायणकृतां शिवस्तुतिं प्रस्तुत्य तत्तुष्टं शिवं प्रति,

'इच्छाम्यहं दिव्यमस्त्रमित्यभाषत शङ्करम्।'

इत्यादिना पाशुपतास्त्रविषयिणीमर्जुनप्रार्थनां च प्रदर्श्य तस्मै पाशुपतास्त्रप्रदानं शिवकृतं प्रदर्शितम्–

'ततः प्रीतं भवं ज्ञात्वा स्मृतिमानर्जुनस्तदा।
वरमारण्यके दत्तं दर्शनं शङ्करस्य च।
मनसा चिन्तयामास तन्मे सम्पद्यतामिति।
तस्य तन्मतमाज्ञाय प्रीतः प्रादाद्वरं भवः।
तच्च पाशुपतं घोरं प्रतिज्ञायाश्च पारणम्।
ततः पाशुपतं दिव्यमवाप्यपुनरीश्वरात्।
संहृष्टरोमा दुर्धर्षः कृतं कार्यममन्यत।
ववन्दतुश्च संहृष्टाः शिरोभ्यां तं महेश्वरम्।
अनुज्ञातौ क्षणे तस्मिन्भवेनार्जुनकेशवौ।
प्राप्तौ स्वशिबिरं वीरौ मुदा परमया युतौ॥

इत्यन्तेन ॥ १२ ॥

श्रीशिवमनादरं कुर्वतां फलं संदर्शयति–

दक्षस्त्र्यक्षं विलक्ष्यं मखभुवि विदधे कां दशां प्राप तस्मा–
द्वामः कामोऽवलिप्तः कुपितहरदृशा दृष्ट एवाशु दग्धः
महात्म्यं शूलपाणेरिति निरुपमितं सप्रमाणं विदित्वा
तन्निन्दां कुर्वते ये कथमिव भविता तद्गतिस्तां न विद्मः ॥१३॥

दक्ष इति । दक्षः–दक्षप्रजापतिः, मखभुवि–यज्ञभूमौ कनकलाख्ये यज्ञमण्डप इत्यर्थः, त्र्यक्षम्–त्रीण्यक्षाणि नयनानि यस्य, तथोक्तम्, 'दृग्दृष्टि नेत्रलोचनचक्षुर्नयनाम्बकेक्षणाक्षीणि' इति हलायुधः । परमेश्वरम्, विलक्ष्यम्–विलक्षयितुमवगणयितुं योग्यमगण्यमित्यर्थः, विदधे–अकरोत् । तथा चोक्तं महाभारते शान्तिपर्वणि–

'सन्ति नो बहवो रुद्राः शूलहस्ताः कपर्दिनः ।
एकादशस्थानगता नाहं वेद्मि महेश्वरम् ॥'

इति । तस्माद्धेतोः स इति शेषः, कां दशां प्राप? दुर्दशामेव प्रापेत्यर्थः । इयं कथा श्रीलिङ्गमहापुराणे पूर्वभागे शततमेऽध्याये प्रपञ्चिता, तद्यथा–

'सूत उवाच–
दक्षयज्ञे सुविपुले देवान् विष्णुपुरोगमान् ।
ददाह भगवान् रुद्रः सर्वान्मुनिगणानपि ॥'

इत्यादिना यज्ञध्वंसं प्रस्तुत्य यज्ञध्वंसार्थं परमेश्वरोत्पादितान्वीरभद्रप्रमुखान्गणानुपवर्ण्य,

'ततः क्षणात्प्रविश्यैव यज्ञवाटं महात्मनः ॥'

इत्यादिना तेषां कनकलाख्ययज्ञवाटप्रवेशमुक्त्वा तत्कृतो दक्षयज्ञस्य तत्र नियुक्तानां विष्णुप्रभृतीनां दक्षस्य च ध्वंसो वर्णितः, तद्यथा–

'उवाच भद्रो भगवान् दक्षं चामिततेजसम् ।
संपर्कादेव दक्षाद्यन्मुनीन्देवान्पिनाकिना ॥
दग्धुं संप्रेषितश्चाहं भवन्तं समुनीश्वरैः ।
इत्युक्त्वा यज्ञशालां तां ददाह गणपुङ्गवः ॥

गणेश्वराश्च संक्रुद्धा यूपानुत्पाट्य चिक्षिपुः ।
प्रस्तोत्रा सह होत्रा च दग्धं चैव गणेश्वरैः ॥
गृहीत्वा गणपाः सर्वान्गङ्गास्रोतसि चिक्षिपुः ।
वीरभद्रो महातेजाः शक्रस्योद्यच्छतः करम् ॥
व्यष्टम्भयददीनात्मा तथान्येषां दिवौकसाम् ।
भगस्य नेत्रे चोत्पाट्य करजाग्रेण लीलया ॥
निहत्य मुष्टिना दन्तान्पूष्णश्चैवंन्यपातयत् ।
तथा चन्द्रमसं देवं पादाङ्गुष्ठेन लीलया ॥
धर्षयामास भगवान्वीरभद्रः प्रतापवान ।
चिच्छेद च शिरस्तस्य शक्रस्य भगवान्प्रभोः ॥
वह्नेर्हस्तद्वयं छित्वा जिह्वामुत्पाट्य लीलया ।
जघान मूर्ध्नि पादेन वीरभद्रो महाबलः ॥
यमस्य दण्डं भगवान्प्रचिच्छेद स्वयं प्रभुः ।
जघान देवमीशानं त्रिशूलेन महाबलम् ॥
त्रयस्त्रिंशत्सुरानेवं विनिहत्य प्रयत्नतः ।
त्रयश्च त्रिशतं तेषां त्रिसाहस्रं च लीलया ॥
त्रयं चैव सुरेन्द्राणां जघान च मुनीश्वरान् ।
अन्यांश्च देवान्देवोऽसौ सर्वान् युद्धाय संस्थितान् ॥
जघान भगवान्रुद्रः खड्गमुष्ट्यादिसायकैः ।
अथ विष्णुर्महातेजाश्चक्रमुद्यम्य मूर्च्छितः ॥
युयोध भगवांस्तेन रुद्रेण सह माधवः ।
तयोः समभवद्युद्धं सुघोरं रोमहर्षणम् ॥
विष्णोर्योगबलात्तस्य दिव्यदेहाः सुदारुणाः ।

शङ्खचक्रगदाहस्ता असङ्ख्याताश्च जज्ञिरे ॥
तान् सर्वानपि देवोऽसौ नारायणसमप्रभान् ।
निहत्य गदया विष्णुं ताडयामास मूर्धनि ॥
ततश्चोरसि तं देवं लीलयैव रणाजिरे ।
पपात च तदा भूमौ विसञ्ज्ञः पुरुषोत्तमः ॥
पुनरुत्थाय तं हन्तुं चक्रमुद्यम्य स प्रभुः
क्रोधरक्तेक्षणः श्रीमानतिष्ठत्पुरुषर्षभः ।
तस्य चक्रं च यद्रौद्रं कालादित्यसमप्रभम् ॥
व्यष्टम्भयददीनात्मा करस्थं न चचाल सः
अतिष्ठत्स्तम्भितस्तेन श्रृङ्गवानिव निश्चलः ॥
त्रिभिश्च धर्षितं शार्ङ्गं त्रिधाभूतं प्रभोस्तदा ।
शार्ङ्गकोटिप्रसङ्गाद्वै चिच्छेद च शिरः प्रभोः ॥
छिन्नं च निपपाताशु शिरस्तस्य रसातले ।
वायुना प्रेरितं चैव प्राणजेन पिनाकिना ॥
प्रविवेश तदा चैव तदीयाहवनीयकम् ।
तत्प्रविध्वस्तकलशं भग्नयूपं सतोरणम् ॥
प्रदीपितमहाशालं दृष्ट्वा चेन्द्रोऽपि दुद्रवे ।
ते तदा मृगरूपेण धावन्तं गगनं प्रति ॥
वीरभद्रः समाधाय विशिरस्कमथाकरोत् ।
ततः प्रजापतिं धर्मं कश्यपं च जगद्गुरुम ॥
अरिष्टनेमिनं वीरो बहुपुत्रं मुनीश्वरम् ।
मुनिमाङ्गिरसं चैव कृष्णाश्वं च महाबलः ॥
जघान मूर्ध्नि पादेन दक्षं चैव यशस्विनम् ।

चिच्छेद च शिरस्तस्य ददाहाग्नौ द्विजोत्तमाः ॥'

इति ।

तथा, कुपितहरदृशा–कुपितश्चासौ हरश्च तस्य या दृक् तया, वामः–सुन्दरः, 'वामौ वल्गुप्रतीपौ द्वौ' इत्यमरः, अत एवावलिप्तः–गर्वितः, कामः–मदनः, दृष्ट एव–दृष्टमात्रः आशु–शीघ्रम् तत्क्षण एवेत्यर्थः, दग्धः । तथाचेयं कथा श्रीशिवमहापुराणे उत्तरखण्डे चतुर्दशेऽध्याये पठ्यते । यथा–

'कामो धनुषि संयोज्य पुष्पबाणं तदा मुने ।
पार्वतीसंमुखे स्थाणौ योक्तु कामो व्यवस्थितः ॥
हरस्तु धैर्यमालम्ब्य किमेतदिति चिन्तयन् ।
ददर्श पृष्ठतः कामं पुष्पबाणधनुर्धरम् ॥
विवृद्धमन्योस्तस्याथ तृतीयनयनान्मुने ।
स्फुरन्नुदर्चिरग्निस्तु पपात मदनोपरि ॥
क्रोधं संहर हे देव इति यावद्वदन्ति खे ।
इन्द्रादिसकला देवास्तावद्भस्मी चकार तम् ॥'

इति । पार्वतीखण्ड एकोनविंशेऽध्यायेऽपि–

'ब्रह्मोवाच–
विचिन्त्यत्थं महायोगी परमेशः सतां गतिः ।
दिशो विलोकयामास परितः शङ्कितस्तदा ॥
वामभागे स्थितं कामं ददर्शाकृष्टबाणकम् ।'

इत्यादिनोपक्रम्य,

'तृतीयात्तस्य नेत्राद्वै निःससार ततो महान् ॥
ललाटमध्यगात्तस्मात्सवह्निर्द्रुतसंभवः ।
जज्वालोर्ध्वशिखो दीप्तः प्रलयाग्निसमप्रभः ॥
उत्पत्य गगने तूर्णं निपत्य धरणीतले ।

भ्रामं भ्रामं स्वपरितः पपातमदनोपरि ॥
भस्मसात्कृतवान्साधो मदनं तावदेवहि ।

इति ।

इत्येवं प्रकारेण शूलपाणेः—शूलं पाणौ यस्य तथोक्तस्य श्रीशिवस्य 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति वक्तव्यम्' (वा. ९००) इति पाणेः सप्तम्यन्तस्योत्तरनिपातः। सप्रमाणम् प्रमाणेन सहितम्, प्रमाणसिद्धमिति यावत् । निरुपमितम्—उपमाऽस्यसञ्जाते-त्युपमितं तादृशं न भवतीति निरुपमितम्, असदृशमित्यर्थः । महात्म्यम् विदित्वा, ये तन्निन्दाम् तस्य शूलपाणेः निन्दाम्—नारायणापेक्षया निकृष्ट इत्येवं लक्षणाम्, कुर्वते, तद्गतिः-तेषां शिवनिन्दकानाम्, गतिस्ताम्, न विद्मः तेषां निरवधिनारकी गति रेवेति भावः 'शिवनिन्दापराणां च शाश्वती नारकी गतिः' इति कर्मविपाकविवेकोक्तेः ॥ १३ ॥

इदानीं श्रीशिवस्य सर्वदेवाति सामर्थ्यं दर्शयति—

क्षीराब्धेर्मथ्यमानाद्यदजनि विषमं दुर्धरं कालकूटं
दृष्ट्वा त्रस्ताः समस्तास्त्रिभुवनपतयो दह्यमानं विदित्वा ॥
धत्ते कण्ठे महेशो जगदुपकृतये हन्त ! नो चेत्तदानीं
केन्द्रो? विष्णुःक्व? वेधाः क्व? च विबुधगणा जङ्गमाजङ्गमं क्व?
॥ १४ ॥

क्षीराब्धेरिति। देवदैत्यैरमृतार्थमिति शेषः। मथ्यमानात् मथ्यतेऽसौमथ्यमानस्तस्मात्, क्षीराब्धेः. यत् विषमम्—क्रूरम्, दुर्धरम्–दुःखेन धर्तुं शक्यम् ,कालकूटम्—तदाख्यं विषम्, अजनि–अजनिष्ट तद्दृष्ट्वा समस्तास्त्रिभुवनपतयः–ब्रह्मविष्णुशक्रादयः, त्रस्ताः–भीताः,तदिनि शेषः, दह्यमानम् दह्यत इति दह्यमानम्, विदित्वा, महेशः, जगदुपकृतये –जगत उपकृतिः रक्षणरूपा तस्यै, कण्ठे, धत्ते–दधाति नो चेत्–अन्यथा–ईश्वरेण कण्ठे तदध्रियमाणे सति, जङ्गमाजङ्गमम्–चराचरात्मकं जगत् क्व ?, विबुधगणाः–देवगणाः क्व ?, इन्द्रः सुरपतिः क्व? वेधाः–ब्राह्मा क्व ?, विष्णुरपि क्व ? हन्त खेदे । यदि महेश्वरः कण्ठे कालकूटं नाधरिष्यत् तदा सर्वे नावर्त्स्यन्त इति भावः । अयमर्थो ब्रह्माण्डपुराणे पूर्वभागे द्वितीयेऽऽनुषङ्गपादे पञ्चविंशतितमेऽध्याये प्रपञ्चितः । यथा—

'मथ्यमानेऽमृते पूर्वं क्षीरोदे सुरदानवैः ।
अग्रे समुत्थितं घोरं विषं कालानलप्रभम् ॥'

इत्यादिना कालकूटोत्पत्तिकथां प्रस्तुत्योत्पन्नं कालकूटं दृष्ट्वा भीतैः सुरासुरमुनिगणै-र्ब्रह्मणे भये निवेदिते, तेन भयकारणे पृष्टे–

सुरासुरैर्मथ्यमाने पयोराशौ पितामह ।
भुजङ्गभृङ्गसंकाशं नीलजीमूतसन्निभम् ॥
प्रादुर्भूतं विषं घोरं संवर्ताग्नि समप्रभम् ।
कालमृत्युरिवोद्भूतं युगान्तादित्यवर्चसम् ॥
त्रैलोक्योत्सादसूर्याभं विस्फुरत्तत्समंततः ।
विषेणोत्तिष्ठमानेन कालानलसमत्विषा ॥
निर्दग्धो रक्तगौराङ्गः कृतः कृष्णो जनार्दनः ।
तं दृष्ट्वा रक्तगौराङ्गं कृतं कृष्णं जनार्दनम् ॥
ततः सर्वे वयं भीतास्त्वामेव शरणं गताः ।'

इति भयहेतुं प्रदर्शितवतस्तान् प्रति–

शृण्वन्तु देवताः सर्वे ऋषयश्च तपोधनाः ॥
यत्तदग्रे समुत्पन्नं मथ्यमाने महोदधौ ।
विषं कालानलप्रख्यं कालकूटमिति श्रुतम् ।
येन प्रोद्भूतमात्रेण न व्यराजन्त देवताः ॥
तस्य विष्णुरहं वापि सर्वेवासुरपुङ्गवाः ।
न शक्नुवन्ति वै सोढुं वेगमन्यत्र शङ्करात् ॥

इति श्रीशिवादृते विष्ण्वादीनां कालकूटवेगसहनासामर्थ्यं ब्रह्मोक्तमुपन्यस्य,

'नमस्तुभ्यं विरूपाक्ष नमस्ते दिव्यचक्षुषे ।'

इत्यादिना ब्रह्मकृतां शिवस्तुतिं प्रदर्श्य,

'प्रादुर्भूतं विषं घोरं संवर्ताग्निसमप्रभम् ।
तं दृष्ट्वा च वयं सर्वे भीताः संभ्रान्तचेतसः ॥
तत्पिबस्व महादेव लोकानां हितकाम्यया ॥

भवान् शक्रश्च भोक्ता वै भवान् देववरः प्रभो ।
त्वदृतेऽन्यो महादेव वेगं सोढुं न विद्यते ॥'

इति विषपानार्थे ब्रह्मकृतामीशप्राथनामुपवर्ण्य श्रीमहेश्वरकृतं कालकूटप्राशनमपि दर्शितम्-

' ततोऽहं पातुमारब्धो विषमन्तकसन्निभम् ।
पिबतो मे महाघोरं विषं सुरभयप्रदम् ॥'

इति ॥ १४ ॥

इदानीं हरिहरयोर्मित्रभावं ज्ञात्वाप्यन्यतरं द्विषतः फलं दर्शयति–

बाणो वा रावणोऽपि स्वभजननिरतावच्युते द्वेषयुक्ता–
वौदास्यादेव शम्भोरधिकतमभुजच्छेदनाशाववाप्तौ ॥
कामः कृष्णांशभूतः पुरभिदि विगुणात्प्राप्त एवातनुत्वं
ज्ञात्वैवं मित्रभावं हरनरकभिदोः केऽपि मूढा भवन्ति ॥ १५ ॥

बाण इति । बाणः–बलिसुतो दैत्यविशेषः ' बाणो बलिसुते शरे ' इति कोशात् । रावणः, इमौ स्वभजननिरतौ–स्वस्येश्वरस्य भजनं सेवा तस्मिन्निरतावासक्तावपि, अपि-भिन्नक्रमः, अच्युते, द्वेषयुक्तौ,शम्भोरौदास्यादेव–गर्वोक्तिप्रयुक्तशापादेवेति यावत् । तथा च श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखण्डे द्विपञ्चाशत्तमेऽध्याये भुजकण्डूत्या युद्धमभ्यर्थ्यमाणाय बाणाय रुद्रशापो दर्शितः–

' रुद्र उवाच–
धिक्धिक् त्वं सर्वतो गर्विन् सर्वदैत्यकुलाधम ।
बलिपुत्रस्य भक्तस्य नोचितं वच ईदृशम् ॥
दर्पस्यास्य प्रशमनं लप्स्यसे चाशु दारुणम् ।
महायुद्धमकस्माद्वै बलिना मत्समेन हि ॥
तत्र ते गिरिसंकाशा बाहवोऽनलकाष्ठवत् ।
छिन्ना भूमौ पतिष्यन्ति शस्त्रास्त्रैः कदनीकृताः ॥'

इत्यादिना । अधिकतमभुजच्छेदनाशौ–सर्वेषामधिका अधिकतमास्ते च ते भुजाश्च तेषां छेदः, नाशोमरणम्, यथाक्रमम्, अवाप्तौ–प्राप्तौ । बाणभुजच्छेदस्तत्रैव पञ्चपञ्चा-

शततमेऽध्याये दर्शितः–

'कृष्णोऽथ कृत्वा समरं चिरं बाणेनवीर्यवान् ।
शिवाज्ञया प्राप्तबलश्चुकोपाति मुनीश्वरः॥
ततः सुदर्शनेनाशु कृष्णो बाणभुजान्बहून् ।
चिच्छेद भगवान् शम्भुशासनात्परवीरहा ॥'

इति । रावणविनाशकथा श्रीरामायणादौ द्रष्टव्या । कृष्णांशभूतः कामः पुरभिदिशिवे विगुणादिति भावप्रधानो निर्देशः, तपोभङ्गकरणलक्षणापराधादिति यावत् । अतनुत्वम्–अनङ्गत्वमेव, एवकारो भिन्नक्रमः, प्राप्तः । इयंकथा 'दक्षस्त्र्यक्षं विलक्ष्यम्' इत्येतस्य श्लोकस्य व्याख्यायां दर्शिता । एवं हरनरकभिदोः–हरश्च नरकभिच्च तयोः, मित्रभावम् मित्रत्व ज्ञात्वापि केचन मूढा भवन्ति । ज्ञातेऽप्यर्थे दुरदृष्टवशाद्विपरीतबुद्धयो भवन्तीति हृदयम् ॥ १५ ॥

इदानीं श्रीशिवस्य सर्वदेवातिशायित्वं वर्णयति–

रामस्त्रिः सप्तकृत्वो नृपकुलमवधीद्भार्गवो यत्प्रसादा–
त्कृत्वा लिङ्गप्रतिष्ठां रघुकुलतिलकः प्राप्तवानीप्सितार्थान् ॥
काश्यां यद्राजधान्यां मरणमुपगता मुक्तिमायान्ति जीवाः
कोऽन्यस्तस्मात् त्रिलोक्यां वरद इह परो देवदेवान्महेशात् ॥१६॥

राम इति । भार्गवः–भृगोर्गोत्रापत्यं पुमान्भार्गवः, भृगुकुलोत्पन्न इत्यर्थः, रामः–परशुरामः, यत्प्रसादात्–यस्य परमेश्वरस्य प्रसादोऽनुग्रहस्तस्मात् श्रीशङ्करानुग्रहादित्यर्थः, त्रिःसप्तकृत्वाः–एकविंशतिवारम्,नृपकुलम्, स्वपितृशत्रुक्षत्रियकुलम्,अवधीत्–अहनत् । श्रीशिवमाराध्य तदनुग्रहात्प्राप्तपरशुः परशुरामो नृपकुलमवधीदिति कथा श्रीशिवमहापुराण उमासंहितायां तृतीयेऽध्याये पठिता. यथा–

'तथा च भार्गवो रामो ह्याराध्य तपसा विभुम् ।
निरीक्ष्य दुःखितः शर्वात्पितरं क्षत्रियैर्हतम् ॥
तीक्ष्णं स परशुं लेभे निर्ददाह च तेन तान् ।
त्रिःसप्तकृत्वः क्षत्रांश्च प्रसन्नात्परमेश्वरात् ॥

अजेयश्चामरैश्चैव सोऽद्यापि तपसां निधिः ।
लिङ्गार्चनरतो नित्यं दृश्यते सिद्धचारणैः ॥

इति । रघुकुलतिलकः—रघुकुलस्य तिलक इव तिलको भूषणभूतः श्रेष्ठ इति यावत् । श्रीरामः, लिङ्गप्रतिष्ठाम्, कृत्वा, ईप्सितार्थान्—ईप्सिता इष्टा येऽर्था दिव्यपाशुपतास्त्राद-यस्तान्, प्राप्तवान् । अयमर्थः पद्मपुराणे श्रीशिवगीतासूपनिषत्सु चतुर्थपञ्चमाध्याययो-र्वर्णित :—

‘ सूत उवाच—
एवमुक्त्वामुनिश्रेष्ठे गते तस्मिन्निजाश्रमम् ।
अथ रामगिरौ रामः पुण्ये गोदावरीतटे ॥
शिवालिङ्गं प्रतिष्ठाप्य कृत्वा दीक्षां यथाविधि ।
भूतिभूषितसर्वाङ्गो रुद्राक्षाभरणैर्युतः ॥
अभिषिच्य जलैः पुण्यैर्गौत्तमीसिन्धुसम्भवैः ।
अर्चयित्वा वन्यपुष्पैस्तद्वद्वन्यफलैरपि ॥
भस्मच्छन्नो भस्मशायी व्याघ्रचर्मासने स्थितः ।
नाम्नां सहस्रं प्रजपन्नक्तं दिवमनन्यधीः ॥
मासमेकं फलाहारो मासं पर्णाशनः स्थितः ।
मासमेकं जलाहारो मासं च पवनाशनः ॥
शान्तो दान्तः प्रसन्नात्मा ध्यायन्नेवं महेश्वरम् ।
हृत्पङ्कजे समासीनमुमादेहार्धधारिणम् ॥ (शि.गी.४।१-६)

इत्यादिना । श्रीशिवमहापुराणेऽप्युमासंहितायां तृतीयेऽध्याये दर्शितः—

‘ तथा दाशरथी रामः शिवमाराध्य भक्तितः ।
कृतार्थोऽभून्मुनिश्रेष्ठ ! विजयी सर्वतोऽभवत् ॥
तपस्तप्त्वातिविपुलं पुरा रामो गिरौ मुने ।
शिवाद्धनुः शरं चापं ज्ञानं वै परमुत्तमम् ॥

रावणं सगणं हत्वा सेतुं बध्वाम्भसां निधौ ।
सीतां प्राप्य गृहं यातो बुभुजे निखिलां महीम् ॥'

इति ।

यद्राजधान्याम्-यस्य महेश्वरस्य राजधान्याम्, काश्याम्, मरणमुपगताः जीवाः, मुक्तिम्-सायुज्यरूपाम्, आयान्ति । तथा च स्मर्यते-'काश्यां तु मरणान्मुक्तिः' इति । पठ्यते च श्रीशिवमहापुराणे कोटिरुद्रसंहितायां त्रयोविंशेऽध्याये-

'मम क्षेत्रे मोक्षदे हि यो वा वसति मानवः'।
यथा तथा मृतः स्याच्चेन्मोक्षमाप्नोति निश्चितम् ॥'

इति । तत्रैव च

'एकोऽपि ब्राह्मणो येन काश्यां संवासितः प्रिये ।
काशीवासमवाप्यैव ततो मुक्तिं स विन्दति ॥
काश्यां यो वै मृतश्चैव तस्य जन्म पुनर्न हि ।'

इति ।

तस्मात्, इह, त्रिलोक्याम्-त्रयाणां लोकानां भुवनानां समाहारस्त्रिलोकी 'लोकस्तु भुवनेजने' इति कोशात् । देवदेवात्-देवानां विष्ण्वादीनामपि देवस्तस्मात्, महेशात् अन्यः, परः, श्रेष्ठः, वरदः-वरान् ददातीति वरदः, कोऽस्ति? न कोऽपीत्यर्थः । इतराणां वराणां क्षयिष्णुतया जघन्यत्वेन तद्दातॄणां नास्ति पारम्यं, मुक्तेस्त्वविनाशित्वेनाभ्यर्हिततमत्वात्तत्प्रदातृत्वेन महेश्वरस्यैव सर्वोत्तमत्त्वमिति भावः ॥ १६ ॥

इदानीं साक्षाच्छ्रीहरिणा दर्शितं स्वेश्वराभेदं दृष्ट्वापि कुमतयः श्रीशिवे द्रोहबुद्धिं कुर्वन्तीत्याह-

भेदाभाव प्रतीत्यै जगति हरिहरावेकमूर्तित्वमाप्तौ
लिङ्गाकारं गिरीशं शिरसि कलयते विठ्ठलः पाण्डुरङ्गः ॥
ज्ञात्वा दृष्टोपपत्याऽव्यवहितमुभयोरित्थमैकात्म्यमन्धा
विष्णौ श्रद्धां पुरारौ दधति कुमतयो दुर्धियो द्रोहबुद्धिम् ॥ १७ ॥

भेदेति । हरिहरौ-हरिश्च हरश्च तौ, जगति, भेदाभावप्रतीत्यै-भेदः माध्वरामानुजादिभिः परिकल्पितः हरिहरयोर्भेदो भिन्नत्वं तस्याभाव एकत्वं तस्य प्रतीतिः प्रत्ययस्तस्यै, एक-

मूर्तित्वम्–एकाचासौ मूर्तिर्देहश्च तस्याभावस्तत्वमेकदेहवत्वम्, आप्तौ प्राप्तौ। तदुदाहरणेन स्पष्टयति–पण्ढरपुराख्ये क्षेत्र इति शेषः। विठ्ठलस्तन्नामा पाण्डुरङ्गः–विष्णुः, शिरसि–स्वमस्तके, लिङ्गाकारम्–लिङ्गरूपम्, गिरीशम्–शिवम्, कलयति–बिभर्ति। इत्थम्–अनेन प्रकारेण, उभयोः–हरिहरयोः, अव्यवहितम्–व्यवधानशून्यम्, ऐकात्म्यम्–एकश्चासावात्मा च तस्य भाव ऐकात्म्यमं, दृष्टोपपत्त्या–दृष्टा प्रत्यक्षा या उपपत्तिः प्रमाणं तया, प्रत्यक्षप्रमाणेनेत्यर्थः, ज्ञात्वापि, कुमतयः–कुत्सिता पापवासना वासिता मतयो मनोवृत्तयो येषांते तथोक्ताः, दुर्धियः–दुष्टा रागद्वेषादिदोषदूषिता धीर्बुद्धिर्येषां ते तथोक्ताः, अत एवान्धाः-विवेकशून्याः सन्तः विष्णौ श्रद्धाम्,पुरारौ-शिवे द्रोहबुद्धिं दधति-धारयन्ति॥१७॥

श्रीशिवनिन्दकानां दुरवस्थां दर्शयति–

कर्तर्युत्कृत्तकृन्तप्रकृतिविकृतयः किङ्करैः क्रूरकृत्यै–
राक्रान्ताः क्रौञ्चकङ्कप्रकरनखमुखव्युत्कृतक्रव्यभाराः।
आक्रन्दतोऽवशीयाः क्रकचखररदैः शीर्णिताः शीर्षभागे
कार्तान्तीमार्तिमाप्ता कति कति न नरास्त्र्यम्बके वक्रतर्काः॥१८॥

कर्तरीति। त्र्यम्बके-त्रीणि अम्बकानि नयनानि यस्य तस्मिन्, वक्रतर्काः–वक्रः कुटीलस्तर्को येषां ते तथोक्ताः, अवशीयाः—शिवनिन्दाप्रयुक्तपापवत्तया तत्फलोपभोगार्थं यमदूतपरतन्त्रा इतिभावः, कति कति नराः, कार्तान्तीम्–कृतान्तस्य यमस्य सम्बन्धिनीमार्तिं पीडाम्, न प्राप्ताः? अपितु ये ये वक्रतर्कास्ते सर्वेऽपि प्राप्ता एवेति काकुः। तत्प्रकारं दर्शयति क्रूरकृत्यैः—क्रूरमुग्रं कृत्यं येषां तैस्तथोक्तैः, किङ्करैः—दूतैरर्थाद्यमदूतैरित्यर्थः। आक्रान्ताः -आकृष्टा, पुनः कीदृशाः–कर्तर्युत्कृत्तकृन्तप्रकृतिविकृतयः–कर्तर्या–कृपाण्या 'कृपाणी कर्तरी समे' इत्यमरः, उत्कृत्तकृन्तैरुच्छेदविच्छेदैः प्रकृतेर्देहस्य विकृतिर्विकारो रुग्णावस्थेति यावत् येषां ते तथोक्ताः, पुनः कथं भूताः–क्रौञ्चकङ्कप्रकरनखमुखव्युत्कृतक्रव्यभाराः–क्रौञ्चाः क्रुङाख्याः पक्षिविशेषाः, कङ्काः–लोहपृष्ठाख्याः पक्षिविशेषाः, 'क्रुङ्क्रौञ्चः' इति, 'लोहपृष्ठस्तु कङ्कःस्यात्' इति चामरः, क्रौञ्चाश्च कङ्काश्च तेषां प्रकरास्तोमास्तेषां नखमुखैर्नखाग्रैः,' यद्वा नखानि च मुखानि च तैः, 'प्रखर' इति पाठे तु क्रौञ्चकङ्कानां प्रखरैस्तीक्ष्णैर्नखानां मुखैरग्रैः, नखैर्मुखैश्च वा, व्युत्कृताः–खण्डिताः, क्रव्यभाराः–मांसभाराः येषां ते तथोक्ताः, 'पिशितं तरसं मांसं पललं क्रव्यमामिषम्' इति मांसपर्यायेऽमरसिंहः, पुनः कीदृशाः–शीर्षभागे–मस्तकप्रदेशे क्रकचखररदैः–क्रकचानाम्–करपत्राणां खरैस्तीक्ष्णैः रदैः दन्तैः 'क्रकचोऽस्त्रीकरपत्रम्' इत्यमरः, अक्रशीय इति पाठे तु तस्य बृहदर्थकत्वेन क्रकचविशेषणतेति बोध्यम्,

शीर्णिताः–विदारिताः, अत एवाक्रन्दन्तः-हा हतोऽस्मीति रटन्तः ॥ १८ ॥

अधुना मध्वावतारं तत्कृतिं च वर्णयति–

धृत्वा कैरातवेषं मनसिजरिपुणा दानवो मूकनामा
रक्षार्थं पाण्डुसूनोः कपटकिटिवपुर्यो हतः पूर्वमद्रौ ॥
सोऽयं पाषण्डवादी समजनि तुलवः क्रोधनो निष्क्रियार्थं
भर्गे मात्सर्यबुद्धिर्धरणितलगतो भेदवादान् जजल्प ॥१९॥

धृत्वेति । मनसिजरिपुणा–मनसि जातः मनसिजः कामस्तस्य रिपुः शत्रुः शिवस्तेन, पूर्वम्–पुरा, कैरातवेषम्-किरातस्यायं कैरातः, स चासौ वेषश्च किरातवेषमित्यर्थः, धृत्वा, पाण्डुसूनोः–पाण्डोः सूनुरर्जुनस्तस्य, रक्षार्थम्, अद्रौ हिमवत्पृष्ठे कपटकिटिवपुः–कपटेन धृतं किटेः सूकरस्य वपुः शरीरं येन स तथोक्तः, 'वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः' इति सूकरपर्याये 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः इति शरीरपर्याये चामरः । मूकनामा दानवो हतः, तथाचोक्तं महाभारते वनपर्वणि–

'स सन्निकर्षमागम्य पार्थस्याक्लिष्टकर्मणः ।
मूकं नामदनोः पुत्रं ददर्शाद्भुतदर्शनम्'

( अध्या. ३९ )

इत्याद्युपक्रम्य,

'दृष्ट्वा तं प्रहरिष्यन्तं फाल्गुनं दृढधन्विनम् ।
किरातरूपी सहसा वारयामास शङ्करः ॥
मयैषः प्रार्थितः पूर्वमिन्द्रकीलसमप्रभः ॥
अनादृत्य च तद्वाक्यं प्रजहाराथ फाल्गुनः ॥
किरातश्च समंतस्मिन्नेकलक्ष्ये महाद्युतिः ।
प्रमुमोचाशनिप्रख्यं शरमाग्नि शिखोपमम् ॥
तौ मुक्तौ सायकौ ताभ्यां समं तत्र निपेततुः ।
मूकस्य गात्रे विस्तीर्णे शैलसंहनने तदा ॥
यथाशनेर्विनिर्घोषो वज्रस्येव च पर्वते ।

तथा तयोः सन्निपातशरयोरभवत्तदा ॥
स विद्धो बहुभिर्बाणैर्दीप्तास्यैः पन्नगैरिव ।
ममार राक्षसं रूपं भूयः कृत्वा विभीषणम्
स ददर्श ततो जिष्णुः पुरुषं काञ्चनप्रभम् ।
किरातवेषसंच्छन्नं स्त्रीसहायममित्रहा ॥

इत्यन्तेन दुर्योधनप्रहितो मूकासुरः सौकरं रूपमास्थाय तपस्यन्तमर्जुनं हन्तुमभिद्रुतः श्रीमहेश्वरेण हत इति कथा श्रीशिवमहापुराणे शतरुद्रसंहितायामेकोनचत्वारिंशत्तमेऽ-ध्यायेऽपि पठिता ।

स मूकनामा दानव एव, क्रोधनः सकोपः धरणितलगतः, पाषण्डवादी–पापं सन्व-न्ति ददति स्वसंसर्गिभ्य इति पाषण्डाः, यद्वा–पापं सनन्ति–सेवन्ते इति पाषण्डाः, अत्र प्रक्रिया दर्शितपूर्वेति नेह प्रतन्यते, तेषां वादोऽस्यास्तीति, तुलवः–तुलवजातीयः मध्वनामा, अयम्, निष्क्रियार्थम्–श्रीपरमेश्वरकृतस्वहननप्रतिकारार्थम्, भर्गे–भर्ज्यते संसारमूलाज्ञानमनेनेति भर्गःश्रीशङ्करस्तस्मिन्, मात्सर्यबुद्धिः मत्सर एव मात्सर्यं तद्बुद्धौ यस्य स तथोक्तः सन् भेदवादान्–जीवेश्वरभेदः, जडेश्वरभेदः, जीवजीवभेदः जीवजडभेदः; जडजडभेद इति भेदपञ्चवादान् जजल्प–प्रललाप । श्रीपरमेश्वरेण हतो मूकासुरः सकोपः सन् तस्य निष्क्रियार्थं विष्ण्वाद्यपेक्षया शिवो निकृष्ट इति निकर्षवादमुक्तभेदवादांश्च प्रललापेति भावः । अयमर्थो मध्वस्वरूपनिरूपणेऽपि निरूपितः

'पुरार्जुनः शिवादस्त्रप्राप्तये परमं तपः।
तेपे तद्वृत्तमाकर्ण्य हन्तुं तं दुर्मतिः खलः ॥
दुर्योधनः प्रेरितवान्मूकाख्यमसुरं खलम् ।
सोऽसुरः सौकरं रूपमास्थायार्जुनसन्निधिम् ॥
अभिदुद्राव वै श्रीमाञ्छङ्करो भक्तवत्सलः ।
तं मूकमेव हतवाँस्ततो मूकासुरः खलः ॥
द्वेषमात्सर्यसंयुक्तः प्रतारकशिरोमणिः ।
विश्वस्तायां च ब्राह्मण्यां तपस्विन्यां स कृत्रिमः ॥

जातौ हि तुलवाख्यायां जातो मध्वाभिधानतः ।
ब्रह्मतर्कादिग्रन्थांस्तु प्रकल्प्य श्रुतिदूषकः ॥
उपेक्ष्य पितरं गाढा भक्तिस्तु श्वशुरे यथा ।
अनादृत्य श्रुतिं तन्त्रमवष्टभ्य विमूढधीः ॥
अवैदिकं मतं चक्रे पूर्ववैरमनुस्मरन् ।
शिवस्मार्ताद्वैतनिन्दां तत्र चार्वाकवद्धि सः ॥
जगत्सत्यत्ववादं च जजल्पैहिकसौख्यभुक् ।
शिवस्मार्ताद्वैतमतनिन्दाध्वनितमत्सरः ॥
शाश्वतीं स च पापीयान्द्वैती नरकयातनाम् ।
भुङ्क्ते तेन तदीयैर्नः प्रसङ्गो मास्तु जात्वपि ॥'

इति ॥ १९ ॥

इतो द्वाभ्यां हरिहरयोश्चरितस्य दुर्विज्ञेयतामाचष्टे-

तप्त्वा दीर्घं तपोऽग्रे तपति च बदरीधाम्नि नारायणोऽसौ
तद्वच्छर्वोऽपि शैले कतमामिह तपो दैवतं ध्येयजप्यम् ॥
तत्कर्तव्यं मिथस्तत्किमुकिमुत परब्रह्मणीति प्रतीते-
स्तत्वं को वेद वाचामपि सह मनसा यत्र न प्राप्तिरस्ति॥२०॥

तप्त्वेति । असौ नारायणः, बदरीधाम्नि-बदरिकाश्रमे, अग्रे-पूर्वम्, तपस्तप्त्वा च इदानीमपि तपति । तद्वत् शर्वोऽपि शैले-मन्दराद्रौ तपतीत्यनुषङ्गः । इह तपसि, ध्येयजप्यम्-ध्यातुं योग्यं ध्येयम्, ध्यानविषयमित्यर्थः. जप्तुं योग्यं जप्यम्, जपविषयमित्यर्थः, ध्येयं च जप्यं च तत् । दैवतम्, कतमम् ?, तत्कर्तव्यम्-तयोः शर्वनारायणयोः कर्तव्यं कर्तुं योग्यम् तत्, तत्-तपः, मिथः-परस्परम्-परस्परविषयकम्, नारायणेन क्रियमाणं तपः शर्वविषयकम्, शर्वेणक्रियमाणं नारायणविषयकं किमु ? इत्यर्थः, उत परब्रह्मणि-परमात्मविषयकमिति यावत्, किं ?, तपोविषयिण्याः, प्रतीतेः तत्त्वम्, को वेद ?-को जानाति ?, न कोऽपीत्यर्थः, यत इति शेषः, यत्र-परब्रह्मणि, मनसा सह वाचां प्राप्तिः-प्रवृत्तिः, नास्ति 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'

( तै० २।९ ) इति श्रुतेः ॥ २० ॥

शुक्लं सत्त्वस्य वर्णं कलयति हि शिवोऽकिञ्चनः शान्तरूपः
कृष्णः श्रीमांश्चकृष्णं तमस इह जगन्मोहकोविद्ययाढ्यः ॥
तद्वृत्ते तद्गुणे वा विनिमय उत किं व्यत्ययो वेति तथ्यं
स्वीयं तावेव वित्तो निरुपममहसौ चित्रलीलाविनोदम् ॥२१॥

शुक्लमिति । इह, शिवः, तमोगुणोपाधिमत्तया क्रोधवैरसंहर्तृत्वादिधर्मवत्त्वावश्यम्भावेऽपि अकिञ्चनः–असङ्गः, अत एव शान्तरूपः सन्, विशेषणद्वयेन तस्मिंस्तदुपाधिप्रयुक्तक्रोधादिधर्माणामभावो व्यज्यते । उक्तोपाधिमत्तया श्यामरूपवत्त्वावश्यम्भावेऽपि, सत्त्वस्य–सत्त्वगुणस्य शुक्लं वर्णं कलयति–स्वीकरोति । हि प्रसिद्धम् । श्रीमान्कृष्णः सत्त्वगुणोपाधिशालित्वेन निष्कापट्यादिधर्मनैयत्येऽपि, अविद्यया–तमोगुणप्रधानया अविद्याख्यया शक्त्या आढ्यः–युक्तः, अत एव जगन्मोहकः सन – जगन्मोहयतीति जगन्मोहकः जगन्मोहजनकः, तादृशोपाधिमत्त्वेन शुक्लरूपकलनावश्यकत्वेऽपि तमसः कृष्णं वर्णं कलयति । तद्वृत्तादीनां दुर्विज्ञेयत्वमाचष्टे–तद्वृत्ते–तयोःशिवकृष्णयोर्वृत्तम् –वर्तनम्–संहारविषयं पालनविषयं चेति यावत्, तस्मिन्, किं विनिमयः–व्यतिहारः, उत वा तद्गुणे तयोर्गुणे व्यत्ययः–विपर्ययः, इति स्वीयम्–तथ्यम्, चित्रलीलाविनोदम्–अद्भुतविलासविनोदम्, निरुपममहसौ–निरुपमं महर्ययोस्तौ, तावेव श्रीशिवकृष्णावेव वित्तः–विदतुः, नान्य इति भावः ।

यद्वा–अकिञ्चनः, अत एव शान्तरूपः शिवः सत्त्वस्य तदाख्यस्य गुणस्य शुक्लं वर्णं कलयति । अविद्ययाढ्योऽत एव जगन्मोहकः श्रीमान्कृष्णस्तमसस्तदाख्यस्य गुणस्य कृष्णं वर्णं कलयति । एवं सति, तद्वृत्ते–तयोर्वृत्ते पालनलक्षणे संहाररूपे च विनिमयः किम् ? । शिवस्य सत्त्वगुणोपाधिमत्त्वेन पालनकर्तृत्वमेवोचितं न तु संहारकर्तृत्वम् । विष्णोस्तमोगुणोपाधिशालितया संहारकर्तृतैवोचिता न तु पालनकर्तृता । एवं सति शिवो जगत्संहरति, विष्णुर्जगद्रक्षति ततश्च तयोर्वृत्ते किं विनिमय इति भावः, अन्यत्समानम् ॥ २१ ॥

इदानीं ब्रह्मैवोपाधिवशाद्धरिहरादिसञ्ज्ञां धत्तेऽतो नास्ति वास्तवो भेदो हरिहरयोरित्याह—

उत्पत्तौ राजसं यज्जगत इह तथा पालने सात्विकं त–

त्संहारे तामसं च त्रिगुणविरचितं त्रिप्रकाराधिकारम् ॥
ब्रह्माखण्डस्वरूपं प्रकृतिशबलितं ब्रह्माविष्णूग्रसञ्ज्ञं
प्राप्तं त्रैविध्यमाद्यं न कलुषमतयो जानते भेदभाजः ॥२२॥

उत्पत्ताविति । कलुषमतयः—कलुषा पापमलिना बुद्धिर्येषांऽते तथोक्ताः, अतएव भेदभाजः—भेदं शिवविष्ण्वादिभेदं भजन्ति ते भेदभाजो माध्वादय इत्यर्थः, अखण्डस्वरूपम्—एकरसम्, त्रिविधपरिच्छेदशून्यमिति यावत्, आद्यम्—कारणशून्यम्, ब्रह्म, प्रकृतिशबलितम् सत्—प्रकृत्या मायया शबलितं चित्रितं युक्तमिति यावत्, ब्रह्मविष्णूग्रसञ्ज्ञम्—ब्रह्मा विष्णुरुग्रो रुद्र इति सञ्ज्ञा यस्य तत्तथोक्तम्, भवतीति शेषः, तदेव पुनर्विशिनष्टि—त्रिगुणविरचितम्—त्रयश्च ते गुणाः सत्त्वरजस्तमांसि च तैर्विरचितम्, त्रिप्रकाराधिकारम्—त्रिप्रकारः—त्रिविधो जगज्जनकत्वादिलक्षणोऽधिकारो यस्य तत्, तदेवस्पष्टयति—इह—अस्मिन्ब्रह्माण्डे, जगत उत्पत्तौ यद्ब्रह्म, राजसम्—उद्रिक्तरजोगुणमायाक्रान्तं ब्रह्मसञ्ज्ञम्, तदेव च ब्रह्म पालने सात्विकम्—समुद्रिक्तसत्त्वगुणमायासंवलितम् विष्णुसञ्ज्ञम् तदेव च पुनः संहारे, तामसम्—उद्भूततमोगुणमायावच्छिन्नमुग्रसञ्ज्ञं भवति । एतदुक्तं भवति—ब्रह्मादीनां भेद औपाधिक एव, अभेदस्त्वनौपाधिक इति तेषां भेदो दोषहेतुत्वाद्वर्जनीय एवेति । तथा चोक्तं श्रीमद्देवीभागवते नवमस्कन्धे कर्मविपाके भगवता यमेन—

श्रीकृष्णे च तदर्चायामन्येषां प्रकृतौ सति ।
शिवे च शिवलिङ्गे च सूर्ये सूर्यमणौ तथा ॥ ३२ ॥
‘ गणेशेवाथ दुर्गायामेवं सर्वत्र सुन्दरि ।
यः करोति भेदबुद्धिं ब्रह्महत्यां लभेत्तु सः ॥ ३३ ॥’

(अध्या. ३४)

इति । तत्रैव प्रदेशान्तरेऽपि—

‘ सर्वेश्वरेश्वरे कृष्णे सर्वकारणकारणे ।
सर्वाद्ये सर्वदेवानां सेव्ये सर्वान्तरात्मनि ॥ ३८ ॥
मायया नेकरूपे वाऽप्येक एव हि निर्गुणे ।

करोतीशेन भेदं यो ब्रह्महत्यां लभेत्तु सः ॥ ३९ ॥

( दे. भा. ९।३४ )

इति ।

अत्रेदं बोध्यम्—अशेषविशेषसामान्यरहितं सच्चिदानन्दानन्ताद्वयं ब्रह्मैव मायोपाधिकं सदीश्वरपदाभिधेयताभजत् । 'जीवेशावाभासेन करोति' (नृ. उ. ता. खं. ९) इत्यादि श्रुतेः । स च मायाप्रतिबिम्बित ईश्वर इति प्रकटार्थकारसङ्क्षेपशारीरककार-विद्यारण्यादयः । विवरणकारादयस्तु बिम्बभूत इति । भामतीकारादयस्तु पुनरेवमाहुः—जीवनिष्ठाज्ञानाभिन्नमायाविषय इति । सर्वथापि प्रतिबिम्बादयो मायाप्रयुक्तप्रतिबिम्बत्व-भाजः शुद्धचिदपेक्षया आभास एवेति सोऽ[1]पपद्यते ।

ननु—ह्रदे सूर्याभास इत्यादौ प्रतिबिम्ब एवाभासश्ब्देन व्यवह्रियते न तु बिम्ब इति कथं तत्राभासपदप्रयोगो युज्यते ? इति—चेत् । मैवम्, तल्लक्षणरहितत्वे सति तद्व-द्भासमानत्वमेव तदाभासत्वम् । तच्च शुद्धाभिन्नेषु प्रतिबिम्बादिषु परमार्थसद्रूपत्वाभावात् चित्वेन प्रतीयमानत्वाच्च रजताभासवत्समन्वेति । तद्वद्बिम्बादावप्याभासपदप्रयोगो युज्यत एव ।

स चेश्वर उद्भूतरजोगुणमायाक्रान्तो स्रष्टा ब्रह्मेति व्यपदिश्यते । स एव चोद्भूतस-त्त्वगुणमायावच्छिन्नो रक्षको विष्णुरित्यभिलप्यते । स एव च पुनरुद्रिक्ततमोगुणमायासं-वलितः संहर्ता रुद्र इति व्यवह्रियते । तथा च श्रूयते मैत्रायण्युपनिषदि—

'तस्य प्रोक्ता अग्र्यास्तनवो ब्रह्मा रुद्रो विष्णुरित्यथ यो ह खलु वावास्य राजसोंऽशोऽसौ स योऽयं ब्रह्माथ यो ह खलु वावास्य तामसोंऽशोऽसौ स योऽयं रुद्रोऽथ यो ह खलु वावास्य सात्त्विकोंऽशोऽसौ स एव विष्णुः स वा एष एकस्त्रिधाभूतः'

( मै. ४।५ )

इति अस्य चैतन्यस्य स्वोपाधिभूतमायानिष्ठरजोगुणनिरूपितं ब्रह्मत्वम्, अस्य चैतन्यस्य च स्वोपाधिभूतमायानिष्ठतमोगुणनिरूपितं रुद्रत्वम् अस्यैव चैतन्यस्य स्वोपा-

१ श्रुतिः

धिभूतमायानिष्ठसत्त्वगुणनिरूपितं विष्णुत्वमित्युक्तश्रुतेरभिप्रायः । यथैकस्यैवदेवदत्तस्य स्वगुरुनिरूपितं शिष्यत्वं, स्वशिष्यनिरूपितं गुरुत्वं च । यथा वैकस्यैव यज्ञदत्तस्य स्वपितृनिरूपितं पुत्रत्वं, स्वज्येष्ठभ्रातृनिरूपितमनुजत्वं, स्वभार्यानिरूपितं भर्तृत्वं, स्वपुत्रनिरूपितं पितृत्वं च तथेति । पठ्यते विष्णुपुराणेऽपि—

'परः पराणां पुरुषः परमात्मात्मसंस्थितः ।
रूपवर्णादिनिर्देशविशेषणविवर्जितः ॥
अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः ।
वर्जितः शक्यते वक्तुं यः सदास्तीति केवलम् ॥
सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥
तद्ब्रह्मपरमं नित्यमजमक्षयमव्ययम् ।
एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥'

इत्युपक्रम्य ।,

'जुषन् रजोगुणं तत्र स्वयं विश्वेश्वरो हरिः ।
ब्रह्माभूत्वास्य जगतो विसृष्टौ संप्रवर्तते ॥
सृष्टं च यात्यनुयुगं यावत्कल्पविकल्पना ।
सत्त्वभुग्भगवान्विष्णुरप्रमेयपराक्रमः ॥
तमोद्रेकी च कल्पान्ते रुद्ररूपी जनार्दनः ।
मैत्रेयाखिलभूतानि भक्षयत्यति भीषणः ॥'

इत्यन्तेन । तत्रैव प्रदेशान्तरे—

'सृष्टिस्थित्यन्तकरणाद्ब्रह्मविष्णुशिवात्मिकाम् ।
स सञ्ज्ञां याति भगवानेक एव जनार्दनः ॥'

इति । भागवतेऽप्युक्तम्—

'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तै—

र्युक्तः परः पुरुष एक इहास्य धत्ते ॥
स्थित्यादये हरिविरिञ्चिहरेति सञ्ज्ञाः
श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ॥'

इति । एवमेवाभिहितं सूतसंहितायामपि–

'एक एव शिवः साक्षात्सृष्टिस्थित्यन्तसिद्धये ।
ब्रह्मविष्णुशिवाख्याभिः कल्पनाभिर्विजृम्भितः ॥'

इति ।

तदेवमेक एव परमात्मा स्वोपाधिगुणविशेषेण विष्ण्वादिभेदव्यपदेशभाग्भवति न तु परमार्थत इति । अत्राधिकं जिज्ञासुभिरस्मत्कृतश्रौतसिद्धान्तजाह्नव्यां द्रष्टव्यम् ॥२२॥

अधुना प्रसिद्धवाय्वंशभूतयोर्भीमहनुमतो रद्वैतवादित्वे प्रमाणतया श्रीव्यासोक्तभारतीकथाविशेषसन्दर्भसंसूचनमुखेन, द्वैतवादित्वेन मध्वस्य वाय्ववतारत्वाभावं संसूचयन् व्यासोक्तिं प्रमाणीकुर्वतां नास्ति भेदवादप्रसङ्ग इत्याह–

आहर्तुं स्वर्णपद्मान्गिरिमभिपतितान्मार्गशायी हनूमान्
दृष्ट्वा भीमेन चोक्तो गतिमभिलषता निर्गुणाद्वैतवादः ॥
संवादं वायुसून्वोरपि न कथममी भारतीयं स्मरन्ति
व्यासोक्तानि प्रमाणं यदि किमिति तदा भेदवादप्रसङ्गः॥२३॥

आहर्तुमिति । गिरिम्, अभिपतितान्–परितः पतितान्, स्वर्णपद्मान्-सुवर्णकमलानि, आहर्तुम्–आनेतुम्, गतिम्–गम्यतेऽनयेति गतिर्मार्गस्ताम्, अभिलषता–अभिलषतीति तथोक्तेन, भीमेन दृष्ट्वा, मार्गशायी–मार्गेशायी हनूमान्, निर्गुणाद्वैतवाद उक्तः । तथा च महाभारते, आरण्यके पर्वणि,–

'निर्गुणः परमात्मा तु देहं व्याप्यावतिष्ठते ।
तमहं ज्ञानविज्ञेयं नावमन्ये न लङ्घये ॥
यद्यागमैर्नविद्यां च तमहं भूतभावनम् ।
क्रमेयं त्वां गिरिं चैव हनूमानिव सागरम् ॥'

इत्याद्युक्तेः । अमी–माध्वाः, भारतीयम्–भारतोक्तम्, वायुसून्वोरपि–भीमहनुमतोरपि

'प्रथमो हनुमान्नाम द्वितीयो भीम एव च। पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः।' इति मध्वस्य वाय्ववतारत्वख्यापकेन मध्वकल्पितेनैवश्लोकेन भीमहनुमतोर्मध्वज्येष्ठ भ्रातृत्वमुच्यते, तादृशयोरपीत्यपेरर्थः, संवादम्–निर्दिष्टनिर्गुणाद्वैतवादरूपम्, कथं न स्मरन्ति ? यदि व्यासोक्तानि 'व्यासो नारायणः साक्षात्' इति वचनोक्तनारायणा वतारेण भगवता व्यासेन, उक्तानि प्रमाणम्, तदा, भेदवादप्रसङ्गः–भेदवादः जीवपरमात्मनोर्भेदस्तद्विषयको वादस्तस्य प्रसङ्गः प्रसक्तिः, किमिति–कुतः? नास्तीत्यर्थः। ततश्च माध्वानां भेदवादः श्रीनारायणावतारभूतभगवद्व्यासवचनविरुद्धोऽत एवाप्रामाणिक इति हृदयम्। किञ्च, नापि मध्वस्य वाय्ववतारत्वम्, भेदवादित्वात्। यदि वायुर्मध्वरूपेणावतरिष्यत्तदा स स्वावतारभूतभीमोक्तनिर्गुणाद्वैतवादविरुद्धं भेदवादं नावदिष्यदित्यनुकूलतर्केणाप्रयोजकत्वशङ्काति परास्तेपि वेदितव्यम्। ततश्चायं मध्वो न वाय्ववतारः किन्तु पूर्वोक्तमूकासुर एव। स च श्रीशिवनिन्दार्थं मध्वरूपेणावतीर्णः श्रीशिवनिन्दां वेदविरुद्धान् भेदवादांश्च प्रललापेत्यतिरोहितं प्रेक्षावतामभिनिवेशशून्यानामिति। अधिकं चोपरिष्टात्स्पष्टीकरिष्यामः ॥ २३ ॥

इदानीं हरिहरयोर्वृत्तमाश्चर्यकरमित्याह–

कान्ता लोला तनूजो मदन उरगभुग्वाहनं यस्य तार्क्ष्यः
कापट्येनाजयद्यो बलिमुखदितिजान्सात्त्विकः प्रोच्यते सः ॥
अर्धाङ्गे यस्य भार्या गतविषयरतिः सूनुरुक्षा च यानं
निर्वैरः शान्तरूपः स्वयमपि स कथं तामसश्चित्रमेतत् ॥२४॥

कान्तेति। यस्य कान्ता–भार्या, लक्ष्मीः, लोला–चञ्चला, चञ्चलस्वभावेत्यर्थः। यस्येत्यनुषज्यते। तनूजः–तन्वाः जातस्तनूजः पुत्रः मदनः–स्वयं मूर्तिमान्विषय इव विषयप्रवणोऽन्यानपि तप आदिसन्मार्गात्प्रच्याव्य विषयेषु प्रवर्तकः, यस्य वाहनम्, उरगभुक् उरसा गच्छतीत्युरगः सर्पस्तं भुनक्तीति हिंस्रस्वभाव इति यावत्, तार्क्ष्यः–गरुडः, यः विष्णुः कापट्येन, बलिमुखदितिजान् बलिनामाऽसुरः स मुखमादिर्येषां ते तथोक्ताः, ते च ते दितिजाश्च तान्, अजयत्। भगवान् विष्णुः कापट्ययुक्तः सन् वामनरूपेण दानशौण्डं बलिं प्रति गत्वा पादत्रयपरिमितां भूमिमयाचत, तेन तथेति प्रतिश्रुते, विष्णुस्त्रैविक्रमं रूपमास्थायैकेन पादेन भूलोकं, द्वितीयेनोपरितनं लोकं समाक्रम्य तृतीयपादन्यासार्थं स्थलमाभ्यर्थितवान्। ततो बलिना स्वशिरसि निधेहीत्युक्तस्तथा कृत्वा तं पाताले प्राक्षिपदिति पौराणिकी गाथात्रानुसन्धेया। स एतादृशः कपट-

पटुर्विष्णुः सात्त्विकः प्रोच्यते ! । यस्य भार्या पार्वती, अर्धाङ्गे वसतीति शेषः, यस्य सूनुः—गणेशः षडाननश्च, गतविषयरतिः—गता निवृत्ता विषयरतिः स्रक्चन्दनादिविषय-विषयिणी प्रीतिर्यस्मात्स तथोक्तः, यस्य वाहनम् उक्षा—वृषभः पैशून्यरहित इति भावः, यःस्वयमपि शान्तरूपः, अत एव निर्वैरः—निर्गतं वैरं यस्मात्स तथोक्तः, सर्वभूताना-मद्वेष्टेति यावत्, स एतादृशः कापट्यादिदोषरहितः शिवः, तामसः—तमोगुणोपाधिकः कथं प्रोच्यते ? । एतत्—तामसधर्मिणो विष्णोः सात्त्विकत्वकथनं, सात्त्विकधर्मिणः शिवस्य तामसत्वकथनम्, चित्रम्—अद्भुतम्, इदमत्यन्तानुचितमिति भावः ॥ २४ ॥

इदानीं दुर्विज्ञेयमहिम्नोर्हरिहरयोर्भेदाभावेनान्यतरस्मिन्नपि भक्तिरास्तामितिप्रति-पादनपूर्वकं तत्तारतम्यं तद्भेदवादिनं च प्रतिषेधति—

त्वय्यास्तां भक्तिरेका शिव! मुरभिदि वा नोभयोस्तारतम्यं
तस्यात्मा त्वं स ते वेत्युभयसुमहिमानं विदुः के मनुष्याः ॥
ये तु द्रुह्यन्ति तुभ्यं बलिदमनकृते ये च तैर्नः प्रसङ्गो
माभूद्वा इत्यजस्रं वयमिह युवयोः साञ्जलिं प्रार्थयामः॥२५॥

त्वयीति । हे शिव ! त्वयि, मुरभिदि—मुरं तन्नामानमसुरं भिनत्तीति तादृशे विष्णौ वा, एका मुख्या परेति यावत्, भक्तिः—अनुरागः, ' परानुरक्तिरीश्वरे ' इति भक्तिमीमां-सासूत्रात्, आस्ताम् । तत्र हेतुमाह—उभयोः शिवमुरभिदोः, तारतम्यं न्यूनाधिक्यं नास्ति ।

'तस्य प्रोक्ता अग्र्यास्तनवो ब्रह्मा रुद्रो विष्णुरिति' (मै.४।५)
' यो ब्रह्मविष्णुरुद्राणां भेदमुत्तमभावतः ।
साधयेदुदरव्याधियुक्तो भवति मानवः ॥'
' अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः ।
यातुधाना भविष्यन्ति पिशाचाश्च न संशयः॥'
' क्वचिद्ब्रह्मा क्वचिद्विष्णुः क्वचिद्रुद्रः प्रशस्यते
नानेन तेषामाधिक्यं न्यूनत्वं वा कथं च न ॥'

इत्यादिश्रुतिस्मृतिपुराणप्रामाण्यात् । तयोस्तारम्याभावेऽपि भेदः स्यादित्यत आह—तस्येति । तस्य विष्णोः, आत्मा त्वम् शिवः, ते तव आत्मा विष्णुः, अतस्तयोर्भेदो-

नास्तीत्यर्थः ।

‘हरिरूपी महादेवो लिङ्गरूपी जनार्दनः ।
ईषदप्यन्तरं नास्ति भेदकृन्नरकं व्रजेत् ॥’
‘विष्णोरन्यं तु पश्यन्ति ये मां ब्रह्माणमेव च ।
कुतर्कमतयो मूढाः पच्यन्ते नरकेष्वधः ॥
ये च मूढा दुरात्मानो भिन्नं पश्यन्ति मां हरेः ।
ब्रह्माणं च तथान्येषां भ्रूणहत्यासमं त्वघम् ”
‘शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः ।
तथा शिवमयो विष्णुः सर्वं विष्णुमयं जगत् ॥’

इत्यादिवचनेभ्यः । तन्माहात्म्यस्य दुर्विज्ञेयत्वं काक्वा कथयति–उभयेति । उभय-सुमहिमानम्–उभयोः–शिवमुरभिदोः सुमहिमानम्, के मनुष्याः, वै–निश्चयेन विदुः?, न केऽपीति काकुः । इह–जगति, ये तु तुभ्यम्–शिवाय, बलिदमनकृते- बलेस्तन्नाम्नो दैत्यस्य दमनं करोतीति तस्मै हरये, द्रुह्यन्ति ‘क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः’ ( पा. सू. १।४।३७ ) इति चतुर्थी, तैः– शिवविष्णुद्रोहकृद्भिः सह नोऽस्माकम्, प्रसङ्गः–प्रसक्तिः वै निश्चयेन मा भूत् इति वयम्, युवयोः, साञ्जलिम्–अञ्जलिना सहितं यथा स्यात्तथा, अजस्रम्–निरन्तरम्, प्रार्थयामः ॥ २५ ॥

इदानीं वैदिकधर्मप्रतिष्ठापकान् निंदतां कृतघ्नत्वं वर्णयति–

जित्वा बौद्धान्विवादे श्रुतिपथविमुखानीश्वराभाववादं
चक्रे तौतातितोऽसौ जगति च विजयायैव जैत्रैश्च युक्तः ॥
संन्यासश्चाग्निहोत्रं भजनमपि हरेः स्थापिताश्चेति धर्मा–
स्तन्निन्दाकारिणोऽमी कथमिव कृतका न त्रपन्ते कृतघ्नाः २६

जित्वेति । असौ, तौतातिः तुतातेरपत्यं पुमान् तौतातिः कुमारिलभट्टः, जगति, विजयाय, जैत्रैः–जयशीलैः प्रतिभायुक्तपण्डितमूर्धन्यैरित्यर्थः युक्तः । जामातृयुक्त इति पाठे तु जामाता–प्रभुः–सुधन्वनामा राजा तेन युक्त इत्यर्थः । सन् विवादे, श्रुतिपथ-विमुखान्–वेदबाह्यान् बौद्धादिनास्तिकानित्यर्थः, जित्वा, ईश्वराभाववादम्–निरीश्वर

वादम्, चक्रे । मीमांसकानां नये,–मन्त्रात्मका एव देवा यागाद्याहुतिभागभाजो न त्वाकृतिविशेषशालिन इत्यतो मीमांसकमतप्रवर्तकस्तौतातिर्निरीश्वरवादमवददिति भावः तौतातितः– तौतातिना, तौतातित इति तृतीया, तसेः सार्वविभक्तिकत्वस्मरणात् । संन्यासः–तुरीयाश्रमः, अग्निहोत्रम्, हरेः भजनम्, इति ज्ञानकर्मोपासनात्मककाण्ड-त्रयप्रतिपाद्या इति भावः । धर्माः, स्थापिताः, एवं सतीति शेषः, तन्निन्दाकारिणः–तस्य कुमारिलभट्टस्य धर्मसंस्थापकस्येति भावः, निन्दां कुर्वन्ति ते तथोक्ताः, कृतघ्नाः अमी मध्वाः कथमिव न त्रपन्ते ?

अत्र वस्तुतस्तु विचार्यमाणे श्रीभगवत्पूज्यपादैरेव संन्यासादिधर्मः प्रतिष्ठापितो न तु कुमारिलभट्टैः, तैस्तु केवलं वेदप्रामाण्यप्रतिष्ठापनपूर्वकं कर्मकाण्डं प्रतिष्ठापितम् । ततश्च मूलकृदुक्तिः प्रमादमूलकैव । तथापि, वेदप्रामाण्यप्रतिष्ठापनेन तद्द्वारा वेदोदित-ज्ञानोपासनालक्षणकाण्डद्वयमपि प्रतिष्ठापितमिति 'स्थितस्य गतिश्चिन्तनीया' इति न्यायेन यथाकथञ्चित्समाधेयम् ॥ २६ ॥

इतो माध्वानामप्रामाणिककल्पनाः दर्शयति–

गोविन्देनापि वायोरहह ! समतया भक्तिभाजो नितान्तं
भाविब्रह्मा हनूमान्पवनसुत इति श्लाघ्यजल्पेन दृप्ताः ॥
धातुर्बद्धावमाना मुररिपुसुततां कल्पयन्तो विकल्पान्
वातांशो भीम इत्थं बत ! मलिनधियो मुक्तिमिच्छन्ति
चैभ्यः ॥ २७ ॥

गोविन्देनेति । गोविन्देनापि–विष्णुनापि, समतया–साम्येन, वायोः, नितान्तम्, भक्तिभाजः–भक्तिं भजन्ति सेवन्ते ते तथोक्ताः, अहह ! खेदे । आकाशजन्यत्वेन ध्वंसप्रतियोगिनो जडस्य पञ्चभूतान्तर्गतस्य वायोः श्रीपरमेश्वरेण साम्यकल्पनाया अनु-चितत्वात्खेदाविष्करणमिति भावः । पवनसुतः–वायुपुत्रः हनूमान् भावि ब्रह्मा-भाविकल्पे ब्रह्मा भविता, इति–एवं प्रकारेण, श्लाघ्यजल्पेन-श्लाघितुं योग्यं श्लाघ्यम्, तच्च तज्जल्पं च तेन दृप्ताः–दर्पाध्माता इत्यर्थः । धातुः–ब्रह्मणः, बद्धावमानाः–बद्धमवमानं यैस्ते तथोक्ताः मुररिपुसुतताम्–मुररिपोः विष्णोः सुतस्तस्य भावस्तत्तां विष्णुपुत्रत्वम्, कल्पयन्तः, भीमः, वातांशः–वातस्य वायोरंशः, इत्थं विकल्पान् कल्पयन्तः, मलिनधियः–मलिना दुष्टा धीः बुद्धिर्येषां ते तथोक्ताः, माध्वाः एभ्यः–हनुमदादिभ्यः, मुक्तिमिच्छन्ति बत !

खेदे । अन्यस्मान्मुक्तिं काङ्क्षतां स्वयमसिद्धानां हनुमदादीनां मुक्तिप्रदातृत्वकल्पनात्यन्तमुपहसनीयेति भावः ॥ २७ ॥

इदानीं ब्रह्मविष्ण्वादिदेवानां वृत्तान्तस्य दुर्विज्ञेयत्वप्रतिपादनमुखेन तेषां तारतम्याभावं सूचयति—

आदित्यानां कनीयान्बलभिदवरजः काश्यपो विष्णुरुक्तो
धातुः पौत्रत्वमाप्तः कथमुदरभवः कथ्यतेऽजो मुरारेः ।
आविष्टो नाभिपद्मे विधिरथ न स किं तत्सुतः कोऽपि रुद्रो
यो वेधोभालजन्मेत्याखिलमिदमतो दुर्विदं देववृत्तम् ॥ २८ ॥

आदित्यानामिति विष्णुः,बलभिदवरजः-बलभिदः शक्रस्यावरजोऽनुजः, पुनः कथं भूतः? आदित्यानाम्—द्वादशादित्यानाम्, कनीयान्—कनिष्ठभ्राता, प्रवर्तमानमन्वन्तरे कश्यपमहर्षेर्ज्येष्ठभार्यायामदित्यां द्वादशादित्या जज्ञिरे । ते चैते—धाता, मित्रः, अर्यमा, शक्रः, वरुणः, अंशुमान्, भगः, विवस्वान्, पूषा, सविता, त्वष्टा, विष्णुश्चेति भारती कथात्रानुसन्धेया । अत एव काश्यपः, उक्तः, अत एव च धातुः—ब्रह्मणः—विधेः, पौत्रत्वम् पुत्रस्य—कश्यपनाम्नः पुत्रस्यापत्यं पौत्रः, तस्य भावस्तत्त्वम् । आप्तः प्राप्तः । एवं स्थिति, अजः ब्रह्मा, मुरारेः- काश्यपस्य—ब्रह्मपौत्रस्य—मुरारेः, उदरभवः—उदरे—जठरे भवः—उत्पन्नः, कथं कथ्यते ? । शिष्टं स्पष्टम् ॥ २८ ॥

इदानीं भगवद्भोगोपकारकत्वेन पूज्यानामग्न्यादीनां सेवनमपहाय वायुतदंशसेवनमनुचितमित्याह—

आकाशादेव वातज्वलनजलधराद्याविरासीत्क्रमात्स-
द्ब्रह्मैव व्याप्य तं तं सहगुण उदितो वायुरग्निः सुरास्यम् ।
आपो नारायणस्यायनमवनिरपि प्रेयसी भूतधात्री
हित्वैतान्मातरिश्वा किमिति कुमतिभिःसेव्यते तस्य चांशौ॥२९॥

आकाशादेवेति । आकाशादेव, क्रमात्, वातज्वलनजलधरादि—वातः—वायुः, ज्वलनोऽग्निः, जलम्, धरा—पृथिवी, ता एवादयो यस्य तत्तथोक्तम्, सद्रूपम्, ब्रह्मैव तं तं पदार्थं व्याप्याविरासीत् । 'तत्सृष्ट्वा तदेवानुप्राविशत्' ( तै॰ २।६ ) 'ऐतदात्म्यमिदं सर्वम्' ( छां॰ ६॥८।७ ) 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुः' ( तै. २।१ ) इत्यादिश्रुतिभ्यः । सहगुणः—स्पर्शादिगुणैः सहितः, वायुः, उदितः-

उत्पन्नः, सुरास्यम्—सुराणां देवानामास्यं मुखम्, अग्निः सगुणः सन्नुदितः, नारायणस्यायनम्–आश्रयभूताः, आपः, सगुणा उदिताः नारायणस्य प्रेयसी भार्या ‘ समुद्रवसने देवि पर्वतस्तनमण्डिते ॥ विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ’ इत्यत्र पृथिव्या विष्णुपत्नीत्वोक्तेः । भूतधात्रीभूतानां प्राणिनां धात्री माता, उपमाता वा, अवनिरपि सगुणोदिता । एतान् हित्वा कुमतिभिः–कुत्सिता मात्सर्यभ्रमादिदोषैर्दूषिता मतिर्येषां तैस्तथोक्तैर्माध्वैरित्यर्थः, मातरिश्वा–वायुः किमिति सेव्यते ? । तस्य वायोः अंशौ च मारुतिभीमौ किमिति ‘ सेव्येते ’ इति वचनविपरिणामेनान्वयः ।

अत्र वाय्वादीनां गुणपूर्वकोत्पत्त्यभिधानादनित्यत्वं सूचितम् । ‘ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ’ (ब्र. सू. २।२।१५) इति न्यायात् । ततश्च वायुतदंशसेवनमत्यन्तमनुचितमिति ध्येयम् ॥ २९ ॥

वातादीनां परायत्तत्वेनोत्पत्तिविनाशशालितया च मोक्षप्रदातृत्वं नास्तिति प्रतिपादयति–

वातो यः स्वाधिकारं कलयति हनुमान् रामकीर्त्या समं वा
जीवन्नास्तां च भीमो निधनमुपगतो मोक्षदाः कस्य वै ते ॥
यद्भीत्या वाति वायुः समुदयति रविः प्रज्वलत्यग्निरिन्द्रो
मृत्युर्वा धावतीदं परममिह महः श्रेयसे चिन्तयामः ॥३०॥

वात इति । यः, वातः स्वाधिकारम्–सदागतिमत्त्वरूपम्, कलयति–करोति । यः, हनुमान्, रामकीर्त्या–श्रीरामस्य दाशरथेः कीर्तिः यशस्तया, समम्, रामकीर्त्येवधिकमिति यावत्, वेति समुच्चयार्थे, जीवन्नास्तां च । भीमश्च भीमसेनः—कुन्तीपुत्रः, निधनम्–मृतिम्, उपगतः–प्राप्तः । एते वातादयः कस्य मोक्षदाः– मोक्षं ददतीति मोक्षदाः ? न कस्यापीत्यर्थः । पारतन्त्र्येण सदागतिमत्त्वेऽधिकृतवतो वातस्य, रामभृत्यस्य हनुमतः, मृतिमुपगतवतो भीमस्य च मोक्षप्रदातृत्वं नोपपद्यते, तेषामुत्पत्तिविनाशशालित्वात्, ‘ स्वयमसिद्धाः कथं परान् तारयिष्यन्ति ’ इति न्यायाच्चेति भावः । वाय्वादेः पारतन्त्र्यं स्पष्टयति–इह–जगति, यद्भीत्या–यस्य परमात्मनो भीतिस्तया, वायुः, वाति, यद्भीत्येत्यनुषज्यते । एवमग्रेऽपि । रविः समुदयति । अग्निः प्रज्वलति । इन्द्रः धावति, शत्रून्प्रतीति शेषः । मृत्युर्वा धावति, प्राणिनः प्राणानपहर्तुमिति शेषः । तथा च मन्त्रवर्णः ‘ भीषास्माद्वातः पवते भीषोदेति सूर्यः ’ ( तै. २।८ ) इत्यादिः । वाकारः समुच्चयार्थः । अतोऽप्यतीतानन्तरश्लोकोक्तं स्पष्टं वायुतदंशसेवनमत्यन्तमयुक्तमिति । एवं वाय्वादीनां

पारतन्त्र्यादिहेतुभ्यो ध्यानानर्हत्वं प्रतिपाद्य ध्येयं दर्शयति–परममिति । परमम्-श्रेष्ठम्, मायातीतमिति यावत्, महः–तेजश्चित्स्वरूपं ब्रह्मेति यावत्, श्रेयसे–अपवर्गाय ' मुक्तिः कैवल्यनिर्वाणश्रेयोनिः–श्रेयसामृतम् ' ( अ. को. १।५।६ ) इति मुक्तिपर्यायेऽमरसिंहः। चिन्तयामः–ध्यायामः ॥ ३० ॥

इतो द्वाभ्यां श्रीशिवस्य सर्वदेवातिशायित्वं दर्शयति–

विष्णुं कृत्वा पृषत्कं त्रिपुरमुदहरद्दुर्जयं निर्जराद्यै–
र्दैत्यानां मोहिनीं च स्त्रियमपि विदधद्यश्चकारातिकायम् ॥
वेदानश्वान्पुनश्चाप्यकुरुत स शिवः सर्वतन्त्रस्वतन्त्रो
लीलाकैवल्यमूर्तिर्जगति विजयते दैवतं देवतानाम् ॥ ३१ ॥

विष्णुमिति । यः, विष्णुम्–अतिकायम्–पुरुषशरीरमतिक्रम्य वर्तमानमतिकायम्, विदधत् सत्, दैत्यानाम्–मायविनामपि, मोहिनीम्, स्त्रियम्, चकार किञ्चेतिचार्थः विष्णुम्, पृषत्कम्-बाणम्, निर्जराद्यैः–देवादिभिः, दुर्जयम्–दुःखेन जेतुं शक्यस्तम्, त्रिपुरम्–त्रयाणां पुराणां–काञ्चनराजतायसानां स्वर्गान्तरिक्षमर्त्यलोकानुचारिणां तारकाक्ष-कमलाक्षविद्युन्मालिसञ्ज्ञकैर्दैत्यराजैरधिष्ठितानाम् दुर्गाणां समाहारस्त्रिपुरम् । अत्र त्रिपुरशब्दोऽजहत्स्वार्थलक्षणया त्रिपुरस्वामिनामप्युपलक्षकः । उदहरत्–जघान । पुनश्च तदैव, वेदानश्वान्, अकुरुत–कृतवान् । तथा चोक्तं श्रीशिवमहापुराणे रुद्रसंहितायां पञ्चमे युद्धखण्डेऽष्टमेऽध्याये–

' इषुर्विष्णुर्महातेजास्त्वग्निः शल्यं प्रकीर्तितम् ।
हयास्तस्य तथा प्रोक्ताश्चत्वारो निगमा मुने ॥'

इति तत्रैवैकादशेऽध्याये त्रिपुरदाहो वर्णितः–

' इति स्तुतोऽमरैः सर्वैर्विष्णवादिविधिभिस्तदा ।
दग्धुं पुरत्रयं तद्वै बाणेनैच्छन्महेश्वरः ॥
अभिलाख्ये मुहूर्ते तु विकृष्य धनुरद्भुतम् ।
कृत्वा ज्यातलनिर्घोषं नादमत्यन्तदुःसहम् ॥
आत्मनो नाम विश्राव्य समाभाष्य महासुरान् ।

मार्तण्डकोटिवपुषं काण्डमुग्रो मुमोच ह ॥
ददाह त्रिपुरांस्तांस्तान्दैत्यांस्त्रीन् विमलापहः ॥
स आशुगो विष्णुमयो वह्निशल्यो महाज्वलन् ।
ततः पुराणि दग्धानि चतुर्जलधिमेखलाम् ॥
गतानि युगपद्भूमिं त्रीणि दग्धानि भस्मशः ।
दैत्यास्तु शतशो दग्धास्तस्य बाणस्थवह्निना ॥
हाहाकारं प्रकुर्वन्तः शिवपूजाव्यतिक्रमात् ।
तारकाक्षस्तु निर्दग्धो भ्रातृभ्यां सहितोऽभवत् ॥
सस्मार स्वप्रभुं देवं शङ्करं भक्तवत्सलम् ।
भक्त्या परमया युक्तः प्रलपन् विविधा गिरः ॥
महादेवं समुद्वीक्ष्य मनसा तमुवाच सः ।
तारकाक्ष उवाचः—
भव ज्ञातोऽसि तुष्टोऽसि यद्यस्मान्सह बन्धुभिः ॥
तेन सत्येन भूयोऽपि कदा त्वं दाहिष्यासि ।
दुर्लभं लब्धमस्माभिर्यदप्राप्यं सुरासुरैः ॥
त्वद्भावभाविता बुद्धिर्जायते ते भवत्विति ।
इत्येवं विब्रुवन्तस्ते दानवास्तेन वह्निना ॥
शिवाज्ञया द्रुतं दग्धा भस्मसादभवन्मुने ।

इति ।

अत एव सर्वतन्त्रस्वतन्त्रः—सर्वाणि च तानि तन्त्राणिच—नियमनादिकार्याणि, सर्वतन्त्राणि, तानि स्वतन्त्राणि यस्य स तथोक्तः, लीलाकैवल्यमूर्तिः—केवलस्य भावः कैवल्यम्, लीलायाः कैवल्यम्, तस्य मूर्तिः, देवतानाम्,—ब्रह्मविष्ण्वादीनाम्, देवतम्—सर्वदेवेश्वर इत्यर्थः, स शिवः, जगति, विजयते—सर्वोत्कर्षेण वर्तते ॥ ३१ ॥

विष्णोरवमकृत्यं दर्शयति-

दृष्ट्वा वृन्दां परस्त्रीं मदनपरवशं स्वप्रियेणापि तस्या
आविष्टायाश्चिताग्निं भसितपरिसरे सन्निषण्णं विषण्णम् ॥
विष्णुं मोहाभिपन्नं पितृविपिनगतं स्वीयमीशः कृपालु-
र्दानेनाबोधयत्किं न कथमपि तुलस्यादिबीजत्रयस्य ॥ ३२ ॥

दृष्ट्वेति । परस्त्रीम्-परस्यान्यस्य जालन्दराख्यदैत्यस्येति यावत्, स्त्री पत्नी ताम्, वृन्दाम्, दृष्ट्वा, मदनपरवशम्-मदनस्य परवशः- आधीनस्तम्, अपि च स्वप्रियेण-स्वस्याः-वृन्दायाः प्रिय-पतिर्जालन्दरः 'धवः प्रियः पतिर्भर्ता' इति भर्तृपर्यायेऽमरसिंहः तेन सह चिताग्निम्, आविष्टाया प्रविष्टायाः तस्याः, वृन्दायाः, भसितपरिसरे-भसितस्य भस्मनः परिसरः पर्यन्तभूमिस्तस्मिन् 'पर्यन्तभू परिसरः' इत्यमरोक्तेः । सन्निषण्णम्-उपविष्टम्, विषण्णम्-खिन्नम्, मोहाभिपन्नम्-मोहः-अज्ञानम्- मतिभ्रमः-प्रेमान्ध्यमिति यावत्, तेनाभिपन्नः- अभितो व्याप्तः पूर्णव्याप्त इति यावत्, तम्, पितृविपिनगतम्-पितृविपिनं स्मशानं गतः स्थितस्तम् 'स्मशानं स्यात्पितृवनम्' (अ. को. २।८।११८) इति स्मशानपर्यायेऽमरसिंहोक्तेः । विष्णुम्, कृपालुः स्वयमीशः-श्रीशङ्करः, तुलस्यादि बीजत्रयस्य-तुलस्यादीनां बीजानि तेषां त्रयस्य दानेन दापनेनेतियावत् कथमपि न अबोधयत्किम् ? अपि तु अबोधयदेवेत्यर्थः । तथा च श्रीशिवमहापुराणे द्वितीयायां रुद्रसंहितायां पञ्चमे युद्धखण्डे त्रयोविंशेऽध्याये-

'वृन्दामालिङ्ग्य तद्वक्त्रं चुचुम्ब प्रीतमानसः ।
अथ वृन्दापि भर्तारं दृष्ट्वा हर्षितमानसा ॥
जहौ शोकं च निखिलं स्वप्नवद्धृद्यमन्यत ।
अथ प्रसन्नहृदया सा हि सञ्जातहृच्छया ॥
रेमे तद्वनमध्यस्था तद्युक्ता बहुवासरान् ।
कदाचित्सुरतस्यान्ते दृष्ट्वा विष्णुं तमेव हि ॥
निर्भर्त्स्य क्रोधसंयुक्ता वृन्दा वचनमब्रवीत् ।
वृन्दोवाच-
धिक् ! त्वदीयं हरे ! शीलं परदाराभिगामिनः ॥

ज्ञातोऽसि त्वं मया सम्यग्मायी प्रच्छन्नतापसः ।

सनत्कुमार उवाच–

' इत्युक्त्वा क्रोधमापन्ना दर्शयन्ती स्वतेजसम् ॥

शशाप केशवं व्यास पातिव्रत्यरता च सा ।

रे महाधम ! दैत्यारे ! परधर्मे विदूषक !

गृह्णीष्व शठ ! मद्दत्तं शापं सर्पविषोल्बणम् ।

यौ त्वया माययाख्यातौ स्वकीयौ दर्शितौ मम ॥

तावेव राक्षसौ भूत्वा भार्यां तव हरिष्यतः ।

त्वं चापि भार्या दुःखार्तो वने कपिसहायवान् ॥

भ्रम स[१]र्पेश्वरेणायं यस्ते शिष्यत्वमागतः ।'

इति विष्णुकृतवृन्दापातिव्रत्यभङ्गं तत्प्रयुक्तं तस्मै वृन्दादत्तशापं च समुपवर्ण्य पुनश्च तत्रैव प्रदेशान्तरे–

' वृन्दाविमोहिता नाथ विष्णुना हि प्रयत्नतः ।

भस्मीभूता द्रुतं वह्नौ परमां गतिमागता ॥

वृन्दालावण्य संभ्रान्तो विष्णुस्तिष्ठति मोहितः ।

तच्चिता भस्मसंधारी तव मायाविमोहितः ॥'

इत्यादिना,

' कृपां कुरु महेशान ! विष्णुं बोधय बोधय ।

त्वदधीनमिदं सर्वं प्राकृतं सचराचरम् ॥'

इत्यन्तेत श्रीशिवं प्रति ब्रह्मादिकृतप्रार्थनां दर्शयित्वा शिवेन तदिष्टसिद्ध्यर्थं पार्वतीं प्रति शरणगमनाय बोधितैर्ब्रह्मादिभिः कृतां पार्वतीप्रार्थनां च प्रदर्श्य, ततः पार्वत्या वृन्दाचिताभूमौ वापनार्थं तेभ्यो तुलस्यादि बीजत्रयदानं ततश्च तेभ्यो बीजेभ्यस्तुलस्यादीनामुत्पत्तिस्ताः प्राप्य विष्णोर्मोहापगमो वर्णितः–

---

१ सर्पेश्वरो लक्ष्मणः । तस्य शेषावतारत्वात् ।

'इमानि तत्र बीजानि विष्णुर्यत्रावतिष्ठति ।
निर्वपध्वं ततः कार्यं भवतां सिद्धिमेष्यति ॥

इत्यादिना,

'ततो विस्मृतदुःखोऽसौ विष्णुस्ताभ्यां सहैव तु ।
वैकुण्ठमगमत्तुष्टः सर्वदेवनमस्कृतः ॥

इत्यन्तेन ॥ ३२ ॥

इदानीं परम्पराप्राप्तधर्मपरित्यागादिवशान्नरकं प्राप्तास्तत्र त्रात्रन्तराभावच्छ्रीशङ्करं संस्मरन्तीति दर्शयति–

कुम्भीपाकेषु शश्वत्क्रिमिकलिलशकृन्मूत्रपूयादिमिश्रे
कुण्डे वा रौरवाद्ये महति बहुतमस्यन्धतामिस्रसञ्ज्ञे ॥
माध्वाः प्रध्वस्तमार्गाः कृतदुरितचयैः पच्यमानाः क्रमेण
स्वामिंस्त्रायस्व शम्भो ! प्रकटमिति तदा शङ्करं संस्मरन्ति॥ ३३॥

कुम्भीति । प्रध्वस्तमार्गाः–प्रध्वस्तो विच्छिन्नो मार्गः सरणिः पितृपितामहप्रभृतिभिरनुसृतो वैदिको मार्गो येषां ते तथोक्ताः, माध्वाः कृतदुरितचयैः–कृतानि–आचरितानि दुरितानि–पापानि तेषां चयैः समूहैः 'स्तोमौघनिकरव्रातवारसंघातसंचयाः' ( अ. को. २।५।३९ ) इति कोशात् । कुम्भीपाकेषु–तदाख्यनरकविशेषेषु, क्रिमिकलिलशकृन्मूत्रपूयादिमिश्रे–क्रिमिभिः कीटकैः कलिलं व्याप्तम् युक्तमिति यावत् यत् शकृत् विष्ठा च मूत्रं च पूयं च तैर्मिश्रं तस्मिन्, महति, रौरवाद्ये–रौरवस्तदाख्यो नरकविशेष आद्यं यस्य तत्तथोक्ते, महति, बहुतमसि–बहूनि तमांसि यस्मिंस्तत्तथोक्ते, महतीति मध्यमणिन्यायेनोभयत्र संबध्यते, अन्धतामिस्रसञ्ज्ञे–अन्धतामिस्र इति सञ्ज्ञा यस्य तस्मिन्कुण्डे वा, क्रमेण पच्यमानाः सन्तस्तदा, स्वामिन् ! शम्भो !–शं सुखं भवत्यस्मादिति शम्भुस्तत्सम्बुद्धौ, हे शम्भो ! त्रायस्व, इति शङ्करम्–शं सुखं करोतीति तम्, प्रकटं यथास्यात्तथा संस्मरन्ति ॥ ३३ ॥

इदानीमर्जुनस्य नारायणात्मत्वाद्भीमापेक्षया पूज्यत्वं प्रतिपादयति–

आत्मा नारायणस्याधिकचरिततपाः प्राङ्मुनिर्नो बदर्यां
पाण्डोः क्षेत्रे महेन्द्रादजनि भुजसमित्तोषितेशोऽद्वितीयः ॥

वीरो ।दिव्यास्त्रविद्योऽसुरसुरविजयी रूढगीताप्रकाशो
ग्रन्थादौ व्यासवन्द्यः किमिति स विजये नातिरिच्येत भीमात्॥३४॥

आत्मेति । यः नारायणस्य–विष्णोः, आत्मा अंशरूपः–अतिप्रियो वा, मुनिः मननशीलः, ना–नरर्षिः, प्राक्–पुरा, बदर्याम्– बदरिकाश्रमे, अधिकचरिततपाः–अधिकं चरितमनुष्ठितं तपो येन स तथोक्तः, पाण्डोः–तदाख्यस्य राज्ञः, क्षेत्रे–जायायां कुन्त्याम्, 'क्षेत्रं पत्नी शरीरयोः' (अ. को. ३।३।१७९) इत्यमरः, महेन्द्रात्–शक्रात्, अजनि–जज्ञे । उक्तं हि आदिपर्वणि–

एवमुक्त्वा ततः शक्रमाजुहाव यशस्विनी ।
अथाजगाम देवेन्द्रो जनयामास चार्जुनम्'

इति । पुनः कीदृशः–भुजसमित्तोषितेशः–भुजसमिता बाहुयुद्धेन तोषित ईशः शिवो येन स तथोक्तः, पुनः कीदृशः–अद्वितीयः अप्रतिमः, पुनः कीदृशः–वीरः–शूरः पुनः, कीदृशः– दिव्यास्त्रवित्–दिवि भवानि दिव्यानि तानि च अस्त्राणि च तानि वेत्तीति तथोक्तः, पुनः कीदृशः–असुरसुरविजयी–असुराश्च सुराश्च तान् विजयतेऽसौ असुरसुरविजयी, पुनः कथंभूतः?–रूढगीताप्रकाशः–गीतायाः श्रीमद्भगवद्गीतायाः प्रकाशः–विज्ञानं, रूढः–उत्पन्नः गीताप्रकाशो यस्य सं तथोक्तः, पुनः कथम्भूतः– ग्रन्थादौ–महाभारतादिग्रन्थादौ, व्यासवन्द्यः–व्यासेन वन्द्यः, व्यास इव वन्द्य इति वा, 'नारायणं नमस्कृत्य नरं चैव नरोत्तमम्' इत्याद्युक्तेः, इति हेतोः, स नरोऽर्जुन इत्यर्थः, विजये, भीमात् किं नातिरिच्येत ? अपि तु अतिरिच्यते एवेत्यर्थः । भीमस्य वाय्ववतारत्वेन सेव्यत्वेऽपि तदपेक्षयार्जुनस्यैव नारायणात्मत्वादिना श्रेष्ठतरत्वेन सेव्यत्वमिति भावः ॥ ३४ ॥

माध्वानां बुद्धिमालिन्याद्गन्यावन्द्यविवेकशून्यत्वं दर्शयति–

पञ्चानां पाण्डवानां क्रमजननवतां द्रौपदीमेकभार्यां
कष्टं दुःशासनेन स्वसदसि गमितां निस्त्रपां मानयन्तः ॥
तातोक्तस्वामिनिन्दाश्रवणकृततनुत्यागमात्रान्यदेहां
देवीं त्रैलोक्यवन्द्यां बत ! मलिनधियो नाद्रियन्तेऽतिमूढाः ३५

पञ्चानामिति । क्रमजननवताम्–क्रमेण जननमेषामस्तीति क्रमजननवन्तस्तेषाम्, पञ्चानाम्, पाण्डवानाम–धर्मादीनाम्, एकभार्याम्–एका चासौ भार्या चैकभार्या

ताम्, दुःशासनेन, स्वसदसि–स्वसभायाम्, कष्टम्, गमिताम्–प्रापिताम् । उक्तं हि सभापर्वणि–

'ततो दुःशासनो राजन्द्रौपद्या वसनं बलात् ।
सभामध्ये समाक्षिप्य व्यपाक्रष्टुं प्रचक्रमे ॥

इति । निस्त्रपाम्–निर्गता त्रपा लज्जा यस्यास्ताम्, 'मन्दाक्षं ह्रीस्त्रपाव्रीडालज्जा' (अ. को. १।७।२३) इति लज्जापर्यायेऽमरसिंहः । द्रौपदीम्, मानयन्तः । तातोक्तस्वामिनिन्दाश्रवणकृततनुत्यागमात्रान्यदेहाम्–तातेन स्वपित्रा दक्षेणोक्ता स्वामिनः स्वभर्तुः श्रीशङ्करस्य या निन्दा तस्याः श्रवणेन कृतस्तनोर्देहस्य त्यागस्तन्मात्रेणैवान्यो देहो यस्यास्ताम् । तथैवोक्तं लिङ्गपुराणे पूर्वभागे नवतितमेऽध्याये–

नारदस्यैव दक्षोऽपि शापादेवं विनिन्द्य च
अवज्ञा दुर्मदो दक्षो देवदेवमुमापतिम् ॥
अनादृत्य कृतिं ज्ञात्वा सती दक्षेण तत्क्षणात् ।
भस्मीकृत्यात्मनो देहं योगमार्गेण सा पुनः ॥'

इत्यादिना । श्रीमद्भागवते चतुर्थस्कन्धेऽपि–

'अरुद्रभागं तमवेक्ष्य चाध्वरं पित्रा च देवे कृतहेलनं विभो ।
अनादृता यज्ञसदस्यधीश्वरी चुकोप लोकानिव धक्ष्यती रुषा॥'

इति । त्रैलोक्यवन्द्याम्–त्रैलोक्यपूज्याम्, देवीम्–चित्स्वरूपिणीं श्रीपार्वतीम्, मलिनधियः–मलिना पापवासनावासिता धीर्बुद्धिर्येषां ते, अत एवातिमूढाः-अभ्रान्ताः माध्वाः, नाद्रियन्ते बत ! खेदे ॥ ३५ ॥

इदानीं वैदिकमार्गविरोधिनो दर्शयति–

नीचा विद्वेषयुक्ता अपि किल दधते ब्रह्मणोऽप्याकृतित्वं
वैशिष्ट्याद्वैतवादे कथमपि विरता वैष्णवाः केचिदेव ॥
शाक्ता जल्पन्ति मूलप्रकृतिशबलितं ब्रह्म सर्वे तदास्तां
द्वेष्टारो ये वृथास्मानपि सगुणगिरो ब्रह्मणि द्रोहकास्ते ॥ ३६॥

नीचा इति । केचित् नीचा–वैष्णवाः–रामानुजा इत्यर्थः, विद्वेषयुक्ताः सन्तोऽपि

वैशिष्ट्याद्वैतवादे चिज्जडशरीरविशिष्टः परमात्मैक एव न तु तच्छरीरादन्यत्किंचिदप्यस्तीत्येवं रूपे वादे ब्रह्मणः, आकृतित्वम्–सविशेषत्वमितियावत् दधते–अङ्गीकुर्वन्ति कथमपि विरताश्च भवन्ति किल । शाक्ताः, सर्वं ब्रह्म शुद्धचैतन्यमपीति यावत्, प्रकृति शबलितम्–प्रकृत्या – गुणत्रयसाम्यावस्थया–प्रधानेन शबलितमुपहितम् – युक्तमिति यावत्, इति जल्पन्ति, तदास्ताम् । परं तु, अस्मान्, ये वृथा द्वेष्टारः, सगुणगिरः–सगुणब्रह्मवादिनः–ते माध्वाः, ब्रह्मणि द्रोहका भवन्ति । माध्वा हि, अनन्तकल्याणगुणगणपरिपूर्णः क्षीराब्धिवासी शेषशायी लक्ष्मीपतिर्गरुडवाहनो नारायण एव परमात्मा न रुद्रः, स तु तद्भक्तः, उक्तलक्षणविशिष्टनारायणव्यतिरिक्तं ब्रह्म नास्त्येवेति जल्पन्ति । पापिनां परमेश्वरप्रसादशून्यानां श्रीपरमेश्वरे भक्तिरद्वैतज्ञाने चाभिरुचिर्न जायते प्रत्युत प्रद्वेष एव । तथोक्तं श्रीमत्सूतसंहितायाम्–

‘ गौतमस्य मुनेः शापाद्दधीचिमुनिशापतः ।
पूर्वजन्मकृतात्पापादयमर्थो न रोचते ॥
महापापवतां नृणां परमाद्वैतवेदने ।
प्रद्वेषो जायते साक्षाद्वेदजन्ये शिवेऽपि च ॥’

इति ॥ ३६ ॥

बौद्धास्तौताततितेन क्षयमुपगमिताः प्रायशो वेदबाह्याः
शैवाः शूद्रत्वमाप्ता मुरभिदि विगुणा नन्दिपूजारताश्च ॥
माध्वा वा वायुभक्ता विगणितगिरिशाः कालयोगादितिद्वा
वेधाते दाक्षिणस्यां दिशि कलिविहितौ हन्त ! पाषण्डमार्गौ ॥३७॥

बौध्धा इति । तौतातितेन–कुमारिलभट्टेन, वेदबाह्याः–वेदप्रामाण्यमनभ्युपगच्छन्तः, बौद्धाः–क्षणिकविज्ञानवादिनः, प्रायशः, क्षयम्–नाशम्, उपगमिताः–प्रापिताः, किञ्चेति चार्थः मुरभिदि–मुरं तन्नामानमसुरं भेत्तीति तस्मिन् विष्णौ, विगुणाः–द्वेषिणः, शैवाः कण्ठे लिङ्गधारिणः–लिङ्गायतिकाः-जङ्गमा इति भाषायां प्रसिद्धाः, नन्दिपूजारताः–नन्देर्वृषभस्य पूजायां रता आसक्ताः सन्तः, शूद्रत्वमाप्ताः, वा-अपि च विगणितगिरिशाः विगणितः- अनादृतो गिरिशः शिवो यैस्ते, श्रीशिवविद्वेषिणः, वायुभक्ताः–वायोर्जडपञ्चभूतान्यतमस्य सदागतेर्भक्ताः, माध्वाः, इति द्वौ कलिविहितौ–कलिना विहितौ

प्रवर्तितौ, पाषण्डमार्गौ, पाखण्डमार्गाविति पाठान्तरम् । पाषण्डपाखण्डशब्दार्थौ प्राग्वर्णितावेवानुसन्धातव्यौ । दक्षिणस्यां दिशि, कालयोगात् कलिमाहात्म्यवशात्, एधाते । हन्त ! खेदे । श्रेयोऽर्थिभिस्तत्र न प्रवर्तितव्यमिति बोध्यम् ॥ ३७ ॥

क्षुद्रानितरमार्गानुपेक्ष्य महाफलप्रदत्वाच्छ्रेयोर्थिभिर्वैदिकमार्ग एव समाश्रयणीय इत्याह—

वृक्षे वृक्षान्तरत्वं प्रभवति हि यथा राजमार्गेऽन्यमार्गः
प्रत्यग्रास्तद्वदेते कलिकलुषधियां सन्तु पाषण्डमार्गाः
प्राचीनोऽद्वैतमार्गः सुरतरुसदृशो राजमार्गोपमानो
यस्माद्बोधः फलाप्तिर्दृगतिथिनृपवद्ब्रह्मसाक्षात्कृतिश्च ॥ ३८ ॥

वृक्ष इति । यथा हि, वृक्षे, वृक्षान्तरत्वम्—अन्यो वृक्षो वृक्षान्तरं तस्य भावस्तत्त्वम्, प्रभवति—उत्पद्यते । वटाश्वत्थादिषु महावृक्षेष्वाकाशवल्यादि क्षुद्रवृक्षोत्पत्तिर्लोके दृष्टैव । यथा वा राजमार्गे—घण्टापथे, अन्यमार्गः- कुग्रामगमः क्षुद्रमार्गः प्रभवतीत्यनुषङ्गः, तद्वत्—तथा, प्राचीनोऽद्वैतमार्ग इति पदद्वयमाकृष्य सप्तम्या परिणमय्य संबध्यते । प्राचीने, अद्वैतमार्गे, कलिकलुषधियाम्—कलिना कलुषा पापयुक्ता धीर्येषां तेषाम्, 'कलुषं वृजिनैनोऽघम्' ( १।४।२३ ) इति पापपर्यायेऽमरसिंहः, एते प्रत्यग्राः—नवीनाः स्वकपोलकल्पिताः, वेदप्रमाणशून्या अवैदिका इति यावत्, पाषण्डमार्गाः—पाखण्डमार्गा इति पाठान्तरम् सन्तु नाम उपेक्षणीया इति भावः । यस्मात्, बोधः—स्वस्वरूपज्ञानम्, फलाप्तिः—फलस्य—स्वरूपाविर्भावलक्षणस्य मोक्षस्य, आप्तिः-प्राप्तिर्लाभ इति यावत्, दृगतिथिनृपवत्—दृशोर्नेत्रयो रतिथिना नृपेण तुल्या 'तेन तुल्यं क्रिया चेद्वतिः' ( पा. सू. ५।१।११५ ) इति वतिप्रत्ययः, ब्रह्मसाक्षात्कृतिश्च भवति । सः प्राचीनः—पुराणः श्रुतिस्मृत्यादिषु प्रसिद्ध इति भावः, सुरतरुसदृशः- सुरतरुणा सदृशः, राजमार्गोपमानः—राजमार्ग उपमानं यस्य स तथोक्तः, अद्वैतमार्गः—प्रत्यक्परात्मैक्यबोधकः समाश्रयणीय इतिशेषः, राजदिदृक्षुणा पुरुषेण राजमार्गेणैव गन्तव्यं नान्येन, तथा ब्रह्मजिज्ञासुना मुमुक्षुणा वैदिकब्राह्मणेन श्रुतिप्रतिपादिताद्वैतमार्ग एवं समाश्रयणीय इति भावः ॥ ३८ ॥

इदानीं माध्वसंन्यासिनं तत्कृतिं च समुपवर्णयति चतुर्भिः—

उक्षा प्राग्भारवाही समजनि मनुजो व्याकृतक्षात्रवेषः

क्षुत्क्षामः पत्तिरेकः पशुरिव सरसो वारि गृह्णन्मुखेन ॥
संन्यासं प्राप्य बुद्धया कलितनिजमतालम्भिताचार्यदम्भो
मध्वोक्तग्रन्थभारं व्यतनुत विशदं श्लाघ्यजल्पोऽयमेषाम्।३९।

उक्षा इति । यः प्राक्–पुरा पूर्वस्मिन् जन्मनि,–भारवाही–भारं वहतीति, भार वाहक उक्षा वृषभः, मनुजः समजनि–मनुष्यत्वेनोत्पन्नः, सः किं कृतवानित्यपेक्षायामाह व्याकृतेति । व्याकृतक्षात्रवेषः–व्याकृतः क्षात्रस्य वेषो येन स तथोक्तः, कथं भूतः? एकः–एकाकी, पुन कथं भूतः? पत्तिः–पादचारी, पुनः कीदृशः?–क्षुत्क्षामः क्षुधा तृषा क्षामः, कृशः क इव किं कुर्वन्नित्याशङ्कायामाह -पशुरिति ।पशुरिव मुखेन सरसः कासारात् वारि जलं गृह्णन्पिबन्नित्यर्थः, 'कासारः सरसी सरः' ( १।१०।२८ ) 'वार्वारि सलिलं कमलं जलम् ' ( १।१०।३ ) इति चामरः । स ततः किमकुरुतेत्यपेक्षायां ब्रूते–बुद्धयेति । बुद्धया नित्यानित्यवस्तुविवेकवैराग्यादिसाधनसंपत्तिमन्तरेति· भावः । संन्यासम् संन्यासवेषमात्रमिति यावत्, प्राप्य–गृहीत्वेति यावत्, अत्रापि देहलीदीपन्यायेन बुद्धयेति संबध्द्यते । बुध्या स्वमतस्यावैदिकत्वमत एव निःसारता च ज्ञात्वापीति भावः, कलितनिजमतालम्भिताचार्यदम्भः–आचार्य इति दम्भः आचार्यदम्भः, निजस्य मतं निजमतम्, कलितमङ्गीकृतं निजमतं यैस्ते कलितनिजमताः, कलितनिजमतैरालाम्भितः प्रापितः आचार्यदम्भो यस्य स तथोक्तः, यद्वा, निजमतमालम्भिताः प्रापिता निजमतालम्भिताः, कलितः–कृतो दर्शित इति यावत्, निजमतालम्भितानामाचार्यदम्भो येन स तथोक्तः, मध्वोक्तग्रन्थभारम्–मध्वेन मूकासुरावतारेण मध्वेनोक्ताः स्वकपोलकल्पिताः श्रुत्यादिप्रमाणरहिता इति भावः, ये ग्रन्थास्तदीयसूत्रभाष्यादयस्तेषां भारस्तम्, विशदम् यथा तथा व्यतनुत व्याख्यातवानित्यर्थः, अयम्–तत्कृतव्याख्यावृत्तान्तः, एषाम्–माध्वानाम्, श्लाघ्यजल्पः प्रौढप्रलापः, माध्वा मध्वकल्पितग्रन्थव्याख्यातत्वेन कपटकाषायं मुधैव स्तुवन्तीति भावः ॥ ३९ ॥

प्राप्तो ग्रामं पुरं वा दिशि दिशि च महापातकित्वोपपन्नान्
प्रायश्चित्तं विनैव द्रविणमभिलषन्योऽनुगृह्णाति मर्त्यान् ॥
शङ्खाभः प्रोक्षणेन स्वयमपि दुरितान्याददानस्तदीया–
न्यन्धो लुब्धः समं तैः कथमिव पतितो नो यतित्वं प्रपन्नः ॥४०॥

प्राप्त इति । यः, यतित्वम्, प्रपन्नः–प्राप्तः, द्रविणम्, अभिलषन्, द्रव्याभिलाषो हि

यतेः प्रतिषिद्धः ' ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय भिक्षाचर्यं चरन्ति ' ( बृ. ४।४।२२) इति श्रुत्या संन्यासिनो वित्तैषणाया व्युत्थानविधानात्। दिशि दिशि, अत्र दिक्पदवीप्सा हि यावद्दिग्विषयबोधमुत्थापयति । तथा च प्रतिदिशमित्यर्थः, ततश्च प्रतिषिद्धदेशेऽपीति निर्गलितोऽर्थः । ग्रामम्, पुरम्, वा–च, प्राप्तः, स किं करोतीत्यपेक्षायामाह–महेति । महापातकित्वोपपन्नान्–महापातकिनो भावा महापातकित्वानि–ब्रह्महत्यासुरापानादीनि तैरुपपन्ना युक्तास्तान्, महापातकानि स्मर्यन्ते–

' ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥'

( मनुः ११।५४ )

इति । मर्त्यान्, प्रायश्चित्तम्–निष्कृतिम्, विनैव केवलम्, शङ्खाभः प्रोक्षणेन शङ्खगतजलप्रोक्षणेन, अनुगृह्णाति–पवित्रीकरोतीत्यर्थः, महापातकिभ्यो द्रव्यमादाय प्रायश्चित्तमन्तरा केवलं शङ्खाभः प्रोक्षणेनैव तान्पवित्रान्मत्वा तैः सह भोजनादिव्यवहारं करोतीति भावः । स, अन्धः–शास्त्रगन्धशून्यो विवेकशून्यश्च, लुब्धः–लोभी, तदीयानि–तेषां महापातकिनामिमानि तदीयानि, दुरितानि–पापानि, आददानः–स्वीकुर्वाणः, तैः–महापातकिभिः, समम्–सह, ' साकं सत्रा समं सह' ( ३।४।४ ] इति सहपर्यायेऽमरसिंहः, तुल्यं वा, कथमिव पतितः, नो–न ? किन्तु पतित एवेत्यर्थः, ' तत्संसर्गीच पञ्चमः' इति स्मरणात् । तत्तत्पापोद्देशेन शास्त्रविहितप्रायश्चित्तानुष्ठानमन्तरा पापनिवृत्त्ययोगात् तादृशैः पातकिभिः साकं व्यवहरन् संसर्गी पतित एवेति स्फुटतरं धर्मशास्त्रविदाम् ॥ ४० ॥

पीठाधीशाग्रगण्यः स्वजनमपि बरीभर्ति भार्यामदौको
मिष्टान्नादो नृवाह्यो भ्रमति वसुमतीं योऽर्थकामः सतृष्णः ॥
येषां मन्त्रोपदष्टा यतिरिति जगति प्रत्यवायानभिज्ञः
पातोऽधः शास्त्रदृष्ट्या बत ! स्फुट गुरुणा तादृशा तेन तेषाम्।४१।

पीठेति । येषाम्–माध्वानामित्यर्थः, पीठाधीशाग्रगण्यः– पीठाधीशेषु मठपतिषु अग्रगण्यः·अग्रे गणयितुं योग्यः, मुख्य इत्यर्थः । माठापत्याग्रगण्यः'इति पाठस्तु प्रामादिकः। सन्निति शेषः, स्वजनम्–स्वपितृभार्यादीन्, बरीभर्ति–अतिशयेन पोषयति, स्वजनपोषणैकप्रवणो भवतीति भावः । पुनः कीदृशः ?–भार्यामदौकाः–भार्यायाः मदस्यौकः–

आश्रय इत्यर्थः, पुनः कीदृशः ?–मिष्टान्नादः–मिष्टं च तदन्नं च तदत्तीति, मिष्टान्नलोलुप इत्यर्थःपुनः कीदृशः?-नृवाह्यः–नृभिः वाह्यः, पुन कथंभूतः,?-सतृष्णः तृष्णया वाञ्छया सहितः अत एवार्थकामः–अर्थस्य द्रव्यस्य कामोऽभिलाषो यस्य स तथोक्तः सन् यद्वा,– अर्थकामः-अर्थकामावेव पुरुषार्थावस्य स्त इत्यर्थकामः, 'अर्श आदित्वान्मत्वर्थीयोऽच्प्रत्ययः। एतेनास्य लोकायतिकत्वं व्यज्यते । नास्तिकशिरोमणेश्चार्वाकस्य मते–'अर्थकामावेव पुरुषार्थौ' इति सिद्धान्तः । सन्, वसुमतीम्–पृथिवीम्, धनलाभार्थं धनाढ्यप्रचुरनगर-मिति भावः, भ्रमति–पर्यटति । द्रव्याभिलाषद्रव्यग्रहणदारोपसङ्ग्रहमिष्टान्नात्वयाना–रोहणादीनि यतेः प्रतिषिद्धानि । तथा च श्रुतयः–

'पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय भिक्षाचर्यं चरन्ति' (बृ. ४।४।२२) इति। 'पाणिपात्रेणाशनं कुर्यात् औषधव दशनमाचरेत् । औषधवदशनं प्राश्नीयात । यथालाभमश्नीयात्प्राण-संधारणार्थं यथा मेदोवृद्धिर्न जायेत । कृशो भूत्वा'

( संन्यासोप. अ. १ )

इति । स्मर्यते च–

'पतत्यसौ ध्रुवं भिक्षुर्यस्य भिक्षोर्द्वयं भवेत् ।
धीपूर्वं रेत उत्सर्गो द्रव्यसंग्रह एव वा ॥'

इति ।

'यानारूढं यतिं दृष्ट्वा सचैलं स्नानमाचरेत् ।'

इति यानारूढं यतिं पश्यतः सचैलस्नानं विदधती स्मृतिर्यतेर्यानारोहणं वारयति । येषां च माध्वानाम्, मन्त्रोपदेष्टा मन्त्रोपदेशकः, जगति यतिरिति च यतित्वेन प्रसिद्ध इति शेषः,परं तु शास्त्रदृष्ट्या प्रत्यवायानभिज्ञः-स्वजनपरिपालनाद्यनाचारप्रयुक्तप्रत्यवायमजानन्, तादृशा–तथाविधेन पूर्वोक्तविशेषणविशिष्टेन तेन–गुरुणा सह तेषाम्-माध्वानाम्, अधः-पातः–नरकपात एव । वाक्यमात्रस्य सावधारणत्वव्युत्पत्तेः । बत ! खेदे ॥ ४१ ॥

आचार्याः केऽपि मासत्रितयमहिततां वर्णयन्तः सगानं
तावत्पाण्डित्ययुक्ताः कृतमणितुलसीकाष्ठमालाः सदम्भाः ॥

श्यामां दृष्ट्वानुरक्तां चरणनिपतितां रूपशस्तां विशस्तां
साकूतस्मेरवक्त्राः करकलितकुचस्पर्शमु त्थापयन्ति ॥ ४२ ॥

आचार्या इति । केऽपि-केचित् आचार्याः-माध्वमठपतयः, कथंभूताः कृतमणितुलसी-काष्ठमालाः—कृता मणयो येषां तानि कृतमणीनि कृतमणीनि च तानि तुलसीकाष्ठानि च कृतमणितुलसीकाष्ठानि, कृतमणितुलसीकाष्ठानां माला येषां ते तथोक्ताः,अत एव सदम्भाः—दम्भेन सहिताः सदम्भाः, पुनः कथंभूताः?—तावत्पाण्डित्ययुक्ताः—तावच्च तत्पाण्डित्यं च तावत्पाण्डित्यं तेन युक्ताः, पुनः कीदृशाः?—मासत्रितयमहितताम्- मासानां वैशाख, कार्तिक, माघाख्यानां मासानां त्रियतं तस्य महिततां पूजितत्वं माहात्म्यमिति यावत्, सगानम्—गानेन सहितं यस्मिन्कर्मणि यथा स्यात्तथा, वर्णयन्तः सन्तः, किं कुर्वन्ती-त्यपेक्षायां ब्रूते—चरणेति । चरणनिपतिताम्—चरणयोर्निपतिता ताम्, कथंभूताम्—रूपशस्ताम्—रूपेण शस्ता ताम् सुरूपामित्यर्थः, अत एव विशस्ताम्—विशेषेण शस्ता शोभना ताम्. अत्यन्तप्रशस्तामित्यर्थः । श्यामाम्—या शीतकाले उष्णा, उष्णकाले शीतला च नवतरुणी च, एतादृशीम्, श्यामालक्षणमुक्तं रतितन्त्रे-

'शीतकाले भवेदुष्णा उष्णकाले च शीतला ।
नवयौवनमध्यस्था सा श्यामा परिकीर्त्यते ॥'

इति । दृष्ट्वा, साकूतस्मेरवक्त्राः— आकूतेन मनोगताशयविशेषेण सहितं स्मेरवक्त्रं स्मितवदनं येषां ते तथोक्ताः सन्तः, करकलितकुचस्पर्शम्—कुचयोः स्पर्शः, कराभ्यां कलितः— कृतः कुचस्पर्शो यस्मिन्कर्मणि यथा स्यात्तथा करकलितकुचस्पर्शम्, उत्थाप-यन्ति । एवमत्र संभोगपूर्वाङ्गकृत्यकथनेन माध्वाचार्याणां संभोगौत्सुक्यं व्यज्यते । तदुक्तं रतिविलासे—

'सस्मितं कुचयोः स्पर्शः संभोगौत्सुक्यहेतुकः ।
पूर्वाङ्गत्वेन रत्यास्तदिष्यते रसिकैर्यतः ॥'

इति । एतेन माध्वाचार्याणां पाण्डित्याभासदुर्वृत्तत्वप्रदर्शनमुखेन मौढ्यं दौष्ट्यं पाति-त्यमपावित्र्यं च सूचितं भवति ॥ ४२ ॥

इदानीं माध्वानाममानुषदौष्ट्यं वर्णयति-

माध्वानां पङ्क्तिमध्ये यदि समभिगतो ब्राह्मणोऽद्वैतवादी

"मायावादी प्रविष्टः कुत" इति कठिनास्ते तमुत्सारयन्ति ॥
अन्नं संप्राथ्यर्मानं रिपुमिव लगुडैर्दूरतस्ताडयन्तः
पापास्तत्स्पृष्टपात्रं हतपृथुकयुता धूलिभिर्दूषयन्ति ॥४३॥

माध्वानामिति । यदि–चेत्, अद्वैतवादी–प्रत्यक्परात्मैक्यवादी, ब्राह्मणः, माध्वानां पङ्क्तिमध्ये, समभिगतः–प्राप्तः, तर्हीति शेषः, कठिनाः–क्रूरा निर्दया इति यावत्, ते–माध्वाः, 'मायावादी कुतः प्रविष्टः' इति–एवम्, प्रलपन्त इति शेषः, तम्–अद्वैतवादिनं ब्राह्मणम्, दूरतः उत्सारयन्ति । किञ्च, अन्नम्, संप्रार्थ्यमानम्, 'अन्नार्थं प्रार्थयन्तम्' इति पाठस्त्वसाधुः, रिपुमिव लगुडैः ताडयन्तः, हतपृथुकयुताः–हता दुष्टाश्च ते पृथुकाःशिशवश्च तैर्युताः, 'पृथुकः शावकः शिशुः'(२।५।३८) इति शिशुपर्यायेऽमरसिंहः, पुनः कीदृशाः?–पापाः–पापिनो माध्वाः, किं कुर्वन्तीत्यत आह–तदिति । तत्स्पृष्टपात्रम्–तेन–अद्वैतवादिना ब्राह्मणेन स्पृष्टं तच्च तत्पात्रं च, धूलिभिः– रजोभिः दूषयन्ति । ब्रह्मद्वेषिणो माध्वा अन्नार्थिनो ब्राह्मणान्बहु पीडयन्तीति भावः ॥४३॥

इदानीं समान्यतो माध्वानां मतस्वरूपं दौष्ट्यं चोपदर्शयति–

येषां दैवतमाशुगोऽमृतकृते भावीविधिर्मारुति–
र्वेदार्थान्तरकल्पनाय कृतका लोकायतप्रक्रिया ॥
आचार्यस्तुलवोद्भवो मतकरो धर्मोऽपि मुद्राधृतिः
वंशध्वंसकचित्रकाः कथममी निन्दन्ति नः कृत्रिमाः ॥४४॥

येषामिति । येषाम्, अमृतकृते–मोक्षाय, दैवतम्, आशुगः–आशु गच्छतीति, वायुः । एतेन वायोः पञ्चभूतान्तर्गताकाशजन्यतया पञ्चभूतान्तर्गतत्वेन च जडत्वाच्चलस्वभावित्वाद्विनाशशालित्वाच्च मोक्षप्रदातृत्वयोग्यताशून्यत्वं ध्वन्यते । वेदार्थान्तरकल्पनाय–अन्यः श्रीव्यासाद्यसंप्रतिपन्नः–अप्रामाणिकोऽर्थोऽर्थान्तरं, वेदस्यार्थान्तरं, तस्य कल्पनाय, भावी–आगामिकल्पीयः, विधिः– ब्रह्मा, मारुतिः । एतेन पञ्चभूतान्तर्गताकाशजन्यवाय्वंशावतारभूतस्य मारुतेः सकलभूतस्रष्टृत्वासंभवेन विधित्वासंभवात्प्रामाणिकार्थान्तरकरणत्वासंभवोऽपि सूचितः । कृतका–कपोलकल्पिता, स्वकपोलकल्पितब्रह्मतर्ककाठरादिवचनावलम्बिता वेदप्रमाणशून्येति भावः, लोकायतप्रक्रिया–लोकायतानां चार्वाकाणां प्रक्रिया–मतप्रक्रिया प्रपञ्चसत्यत्वादिलक्षणेव प्रक्रिया, एतेन तदीयं मतं वैदिकानां मुमुक्षूणामश्रद्धेयमश्राव्यं चेति सूच्यते । येषाम्, मतकरः–मतं जीवे–

श्वरभेदादिभेदपञ्चकं मतं करोतीति मतकरः, आचार्यः– आचार्यमानी, तुलवोद्भवः– तुलवायां तुलवजातीयायां स्त्रियामुद्भव उत्पत्तिर्यस्य सः, यद्वा,–तुलवदेशोद्भवः, तुलवो– द्भव इति पदद्वयमिष्यते कैश्चित् । धर्मोपि मुद्राधृतिः– मुद्राधारणमेव, अवैदिक- स्तन्त्रोक्त इति बोध्यम् । अत्रापिः कर्णे तुलसीपत्रधारणरूपमर्थं समुच्चिनोति । एतेन तेषां वेदभ्रष्टोद्देशकपाञ्चरात्राद्यागमोक्तमुद्राधारणे कर्णे तुलसीपत्रधरणे चैवादरो न तु वेदविहितभस्मधारणसन्ध्यावन्दनपञ्चमहायज्ञाद्यनुष्ठानेष्विति ध्वननद्वारा तेषांमवैदि- कत्वं दाम्भिकत्वं च ध्वनितम् । ते इति शेषः वंशध्वंसकचित्रकाः–वंशध्वंसक इत्यस्य कुलाङ्गारे लक्षणा, तस्य च मषीरूपेऽङ्गारे लक्षणा, एवं लक्षितलक्षणया मषीलक्षणाङ्गा- रमात्र लभ्यते । तस्य चित्रकः– तिलकमूर्ध्वरेषा वा येषां ते तथोक्ताः, यद्वा,– ध्वंसक इत्यनेन ध्वंससूचक इत्यर्थो लक्ष्यते, वंशशब्दः सापिण्ड्यस्थव्यक्तिविशेषं लक्षयति, तथा च सापिण्ड्यगतव्यक्तिविशेषमरणसूचक इत्यर्थो लभ्यते । तथा च सापिण्ड्यस्थव्यक्तिविशेषमरणसूचकश्चित्रकः– मष्यात्मकाङ्गाररेषा येषां ते थोक्ताः, दृष्टश्चायमाचारोऽङ्गारतिलकधारणलक्षणः, क्वचिद्देशे मृतसूतके केचन स्ववंशीयमरण- प्रयुक्तदुःखरूपसमाङ्गल्यं द्योतयितुमङ्गारस्य रेषां तिलकं वा धारयन्ति तल्लक्षणः । तथा च स्ववंशध्वंससूचकवंशध्वंसोपलक्षितकुलाङ्गारोपलक्षितमष्यात्मकाङ्गारतिलक- धारिण इति समुदितार्थः । यद्वा,–वंशध्वंसकचित्राः– सर्पविशेषा इव चित्रा येषां ते वंशध्वंसकचित्रकाः । कृत्रिमाः-मायाविनः कापटिका इति यावत्, अमी–माध्वा इत्यर्थः नः- अस्मान्, कथं निन्दन्ति, तैरस्मन्निंदनं त्वसत्या सतीनिन्दनमिवेति हृदयम् ॥४४॥

एवं मध्वमतस्य जाघन्यं दर्शयित्वा तन्मतप्रवर्तकमध्वस्यापि तद्दर्शयितुं मध्वपदं व्युत्पादयति–

**मत्सरो ध्वनितो येन स्वकपोलकृते मते ॥**
**मतध्वंसकरस्तस्मान्मध्व इत्यभिधीयते ॥४५॥**

मत्सर इति । येन, स्वकपोलकृते–स्वकपोलकल्पितेऽर्थात् वेदाप्रतिपादिते अवैदिक इति भावः । मते मतत्वेन तदभिमते तदीयभाष्यादिग्रन्थे इत्यर्थः, मत्सरो ध्वनितः– श्रीशिवतद्भक्तनिन्दाद्वारेति भावः । तदुक्तं मध्वस्वरूपनिरूपणे–' शिवस्मार्ताद्वैतमतनि– न्दाध्वनितमत्सरः ।' इति । मतध्वंसकरः– वैदिकमतस्य वेदप्रतिपादिताद्वैतमतस्येति भावः, ध्वंसकरो दूषको द्वेष्टेति यावत् । तस्मात्– कारणात्, मध्व इत्यभिधीयते, मत्सरध्वननान्मतध्वंसकरणान्मध्व इत्युच्यत इत्यक्षरार्थः ॥४५॥

अस्ति श्रुतावपि मध्ववाचः प्रसंसेति तदीयां जल्पनां निराचष्टे–

**महाव्याकरणात्कृत्स्नश्रुतेरर्थान्तरेऽपि वा ॥**
**तदा सत्यमिदं भूयान्माध्वीर्गावो भवन्तु नः ॥ ४६ ॥**

महेति । अपि–यदि महाव्याकरणात् महाव्याकरणशास्त्रानुसारतः, कृत्स्नश्रुतेः–सकलवेदस्य, अर्थान्तरम्–अन्यः–मध्ववाक्परः, अर्थोऽर्थान्तरं तस्मिन्सति वा, तदा 'माध्वीर्गावो भवन्तु नः'–नोऽस्माकम्, माध्वीः–मध्वसंबन्धिन्यः, गावो भवन्तु, इदम्–अर्थान्तरं सत्यं भूयात् ।

इदमत्र पर्यालोचनीयम्-वातादीनां मधुररसस्रावविषयिणीं प्रार्थनामाचक्षाणा परमाप्ततमा श्रीभगवती श्रुतिरुन्मत्त इव वैसाङ्कत्यभीतिमनौचित्यभीतिं चापहाय कथमकस्मादेवेदानीन्तनस्य मध्वस्य वागपेक्षाविषयिणीं प्रार्थनामवबोधयेत् ? । अत्रैवं पृष्टस्त्वं व्याचक्ष्व किं 'माध्वीर्गावो भवन्तु नः' इत्यस्याः श्रुतेर्मध्ववागपेक्षाविषयप्रार्थनापरत्वं त्वया विनियोगबलादभ्युपगम्यते ?, आहो स्विदर्थदृष्ट्या ?, उत माध्वशब्दोल्लेखनमात्रेण वा ? । नाद्यः,–तद्विनियोगस्य महाग्निचयनप्रकरणे कूर्माभ्यञ्जने तस्य दृष्टत्वात् । तथा च ब्राह्मणम्–

**'श्मशानं वा एतत्क्रियते यन्मृतानां पशुना ५ शीर्षाण्युपधीयन्ते यज्जीवन्तं कूर्ममुपदधाति तेनाश्मशानचिद्वास्तव्यो वा एष यत्कूर्मो मधुवाता ऋतायत इति दध्ना मधुमिश्रेणाभ्यनक्ति स्वदयत्येवैनं ग्राम्यं वा एतदन्नं यद्दध्यारण्यं मधु यद्दध्ना मधुमिश्रेणाभ्यनक्त्युभयस्यावरुध्यै ।'**

इति । अत्र कूर्माभ्यञ्जनसाधनीभूतग्राम्यारण्यदधिमधुलक्षणद्रवद्रव्यद्वयविधानपूर्विका तत्प्रशंसापि मध्ववाणीपरत्वे विरुद्ध्येत । महाग्निचयनप्रकरणे कूर्मोपधानप्रस्तावे 'मधुवाता इति ऋग्भिरनुच्छन्दसं दध्ना मधुमिश्रेणाभ्यनक्ति' इति बौधायनकल्पसूत्रेण, 'मधुवाता ऋतायत इति तिसृभिर्दध्ना मधुमिश्रेण कूर्ममभ्यज्य' इत्यापस्तम्बकल्पसूत्रेण चास्य मन्त्रस्य कूर्माभ्यञ्जने सुस्पष्टं विनियुक्ततयास्य विनियोगस्य मध्ववाक्परत्वाभावस्य स्पष्टत्वात् । न द्वितीयः,–वातादीनां मधुररसस्रावविषयप्रार्थनापरत्वस्य वेदार्थप्रकाशाख्ये श्रीसायनभाष्ये दर्शितत्वात् । तथा च वेदार्थप्रकाशे–

**'मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वौषधीः ।'**

